श्रीः ।

# न्यायलीलावती ।

श्रीमद्वल्लभाचार्यविरचिता ।



मूल्यं १२ आणकाः ।

THE

# NYÂYALÎLÂVATI

BY

## SHRI VALLABHÂCHARYA



EDITED BY

MANGESH RÂMKRISHNA TELANG



PUBLISHED

BY

TUKÂRÂM JÂVAJÍ,

PROPRIETOR OF "NIRNAYA-SAGAR" PRESS

BOMBAY.

1915.

*Price 12 Annas.*

श्रीः ।

# न्यायलीलावती ।



श्रीमद्वल्लभाचार्यविरचिता ।

इयं

मङ्गेश रामकृष्ण तेलङ्ग

इत्येतैः संस्कृता ।

साच

मुम्बय्यां

तुकाराम जावजी श्रेष्ठिना

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये प्रकाशिता ।

---

शके १८३७, सन १९१५.

---

मूल्यं १२ आणकाः.

# प्रस्तावः ।

वैशेषिकसिद्धान्तसारभूतोऽयं न्यायलीलावतीग्रन्थः । अस्मिन्ग्रन्थे वैशेषिकसिद्धान्तानां मण्डनं क्वचिन्मतान्तरखण्डनं च संक्षिप्ताभिर्युक्तिभिः कृतं दृश्यते। प्रणेता चास्य तार्किकधुरीणो महामहोपाध्यायः श्रीवल्लभाचार्य इति ग्रन्थस्यास्य पुष्पिकातो ज्ञायते । श्रीमद्वल्लभाचार्यस्येतिवृत्तं किंचिदपि नोपलभ्यते । तथाप्येतद्ग्रन्थान्तर्गतानि लिङ्गानि परामृश्य ग्रन्थकर्तुः कालविषये किंचिद्विचार्यते।

श्रीवल्लभाचार्येणास्यां लीलावत्यां किरणावलीकर्तुर्महानैयायिकस्य श्रीमदुदयनाचार्यस्य त्रिषु स्थलेषु (३९, ५६, ९७ पृष्ठेषु) नाम्नोल्लेखः कृतो लभ्यते । अतः श्रीवल्लभाचार्य उदयनाचार्यादर्वाचीन इति तर्क्यते । श्रीमदुदयनाचार्यश्च वैशेषिकमतमनुसृत्य पदार्थादिलक्षणसंग्रहरूपं [1]लक्षणावलीनामकं लघुप्रबन्धं निर्मितवान् । तस्यान्ते तत्प्रबन्धनिर्माणसमयः श्लोकेनोपनिबद्धो यथा—

"तर्काम्बराङ्कप्रमितेष्वतीतेषु( ९०६ )शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥"

एवमुदयनाचार्यो लक्षणावलीग्रन्थं ९०६ शकाब्दे (ख्रि. स. ९८४ वर्षे) रचयामासेति विशदम् । अतो वल्लभाचार्यः शालिवाहनशकस्य दशमशतके तदनन्तरं वासीदिति सुवचम् । श्रीमद्वल्लभाचार्यकृतन्यायलीलावतीग्रन्थस्योपरि नव्यनैयायिकाग्रेसरश्रीगङ्गेशोपाध्ययस्य पुत्रेण श्रीवर्धमानोपाध्यायेन प्रकाशाख्या टीका विरचितेति महामहोपाध्यायश्रीभीमाचार्यप्रणीतन्यायकोश[2]ग्रन्थादवगम्यते । वर्धमानोपाध्यायस्तु ११०० शकाब्दे आसीदिति विदुषां निर्णयः[3] । अतो वल्लभाचार्यस्य स्थितिः शालिवाहनशकस्य ११०० वर्षात्पूर्वमासीदिति स्फुटं भवति ।

---

१ काश्यां 'मेडिकल्हाल' नाम्नि मुद्रणयन्त्रालये मुद्रयित्वा प्रकशितोऽयं प्रबन्धः । २ न्यायकोशस्योपोद्घाते पृ. १२ पं. २१ । ३ न्यायकोशस्योपोद्घाते पृ. ५ पं. १९ तथा "बिब्लियोथेका इंडिका" नाम्नि पुस्तकमालायां प्रकाशितस्य सटीकन्यायकुसुमाञ्जलिग्रन्थस्यानुक्रमणिकायां पृ. २१ पं. २४ ।

इत्थं च महामहोपाध्यायवल्लभाचार्यः शालिवाहनशकस्य ९०६ वर्षादुत्तरं तथा ११०० वर्षात्पूर्वं ( ख्रि. स. ९८४ तथा ११७८ वर्षयोर्मध्ये ) आसीदिति निष्कर्षः ।

वल्लभाचार्यस्य देशनिर्णये तु नोपलभ्यते किंचिदपि ग्रन्थान्तर्गतं प्रमाणम् । उदयनाचार्यादयस्तत्कालीना नैयायिका मैथिलदेशमलंचक्रुरित्यस्ति लोकप्रसिद्धिः । मैथिलेषु तदानीं न्यायशास्त्रप्रचारबाहुल्यमासीत् । अतः कदाचिद्वल्लभाचार्योऽपि मैथिलः स्यादिति संभवदुक्तिकम् ।

श्रीवल्लभाचार्येण न्यायलीलावतीं विनान्यः कोऽपि ग्रन्थो विरचितो न वेति निर्णायकं नोपलभ्यते किमपि साधनम् । न्यायलीलावत्यां तु नास्ति तन्निर्मितग्रन्थान्तरस्य समुल्लेखः ।

अणुभाष्यादिग्रन्थप्रणेता पुष्टिमार्गाख्यनूतनमतस्थापको वल्लभाचार्यस्तु अस्माद्भिन्नोऽर्वाचीनश्चेति ज्ञेयम् ।

अस्य न्यायलीलावतीग्रन्थस्य वाक्सरणिरतीव प्रौढा । अत एवायं प्रबन्धो विद्वन्मान्योऽभूत् । अत एव चास्य त्रिभिर्महानैयायिकपण्डितैर्निम्ननिर्दिष्टास्तिस्रष्टीकाः प्रणीताः यथा—

१ न्यायलीलावतीप्रकाशः—वर्धमानोपाध्यायकृतः ।
२ न्यायलीलावतीदीधितिः—रघुनाथतार्किकशिरोमणिप्रणीतः ।
३ न्यायलीलावतीकण्ठाभरणम्—महामहोपाध्यायशङ्करमिश्रविरचितम् ।

वर्धमानोपाध्यायकृतन्यायलीलावतीप्रकाशस्यापि टीका न्यायलीलावतीप्रकाशविवेकाभिधा मथुरानाथतर्कवागीशभट्टाचार्येण प्रणीतेति च न्यायकोशाज्ज्ञायते[1] । एतट्टीकापुस्तकानि मया नोपलब्धानि ।

न्यायलीलावत्यां श्रीवल्लभाचार्येण येषां ग्रन्थानां ग्रन्थकर्तॄणां च नाम्नोल्लेखः कृतस्तेषां सूची जिज्ञासूनां कृतेऽस्मिन्ग्रन्थेऽन्यत्र प्रकाशिता द्रष्टव्या ।

---

१ न्यायकोशस्योपोद्धाते पृ. १२ पं. २१

एतद्ग्रन्थसंस्करणकाले मातृकापुस्तकद्वयं मयासादितम् , एकं पुण्यपत्तनस्थराजकीयसंस्कृतपुस्तकालयस्थम् , अपरं च मुम्बापुरस्थगीर्वाणवाणीरसिकश्रीकेशवजीनरसिंहजीइत्येतेषामस्मत्सुहृद्भिः वे० शा० पणशीकरोपाह्ववासुदेवशास्त्रिभिर्दत्तम् ।

एतत्पुस्तकद्वयमपि प्रायोऽशुद्धं मध्ये मध्येऽक्षरपदादित्रुटिप्रचुरं चासीत् । तथापि यथामति संशोध्य प्राचीनग्रन्थोद्धारलालसया प्रवृत्तोऽस्मि प्रकाशनेऽस्य ग्रन्थरत्नस्य ।

पुण्यपत्तनस्थराजकीयसंस्कृतपुस्तकालयाधिकारिभिः श्रीमद्भिः प्रोफेसर विनायक सखाराम घाटे इत्यतैस्तथा पणशीकरोपाह्वैर्वासुदेवशास्त्रिभिश्च मातृकापुस्तकप्रदानेनानुगृहीतोऽस्मीति तेषामुपकृतिं शिरसा वहामि ।

प्राचीनसंस्कृतग्रन्थप्रकाशने बद्धपरिकरैर्निर्णयसागरमुद्रणयन्त्रालयाधिपतिभिः श्रीमत्तुकारामजावजीश्रेष्ठिभिः प्रोत्साहितोऽहमस्य संशोधने इतितेषामपि धन्यवादं करोमि ।

यदत्र प्रमादादिजन्यं दोषजातं दृश्येत तत्सदयहृदयैः सद्भिः क्षन्तव्यमिति प्रार्थयति

कारवारपुरे
आषाढ कृ. ५ म्यां
शके १८३७.

विद्वदनुचरः
मङ्गेशशर्मा.



# न्यायलीलावतीग्रन्थस्य

## सूचीपत्रम् ।



# न्यायलीलावत्यामुपलभ्यमानानि

## ग्रन्थानां ग्रन्थकर्तॄणां च नामानि ।





## शुद्धिपत्रम् ।



| | | | | |
|---|---|---|---|---|
| पृष्ठ | ३५ | पं | ७ | पाणिनेरन्या |
| पृष्ठ | ४६ | पं | ६ | स्वप्रज्ञान |
| पृष्ठ | ७४ | पं | २५ | भोक्तृ- |
| पृष्ठ | ८४ | पं | २२ | न्यायवार्तिकम्- |

# न्यायलीलावती ।



श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः ।



नाथः सृजत्यवति यो जगदेकपुत्रः
प्रीत्या ततः परमनिर्वृतिमादधाति ।
तस्मै नमः सहजदीर्घकृपानुबन्ध-
लब्धत्रितत्त्वतनवे पुरुषोत्तमाय ॥ १ ॥

द्रव्यं नाकुलमुज्ज्वलो गुणगणः कर्माधिकं श्लाघ्यते
जातिर्विप्लुतिमागता न च पुनः श्लाघ्या विशेषस्थितिः ।
संबन्धः सहजो गुणादिभिरयं यत्रास्तु सत्प्रीतये
सान्वीक्षानयवेश्मकर्मकुशला श्रीन्यायलीलावती ॥ २ ॥

षडेव पदार्था इति नियमव्यवच्छेद्यं प्रतीतं न वा । अप्रतीतं चेत् कथं निषेधः । प्रतीतं चेत्सप्तैव । पदार्थेषु सप्तत्वं नास्तीति चेन्न । आन्तर्गणिकभेदेन सत्वात् । षड्लक्षणयोगितया नास्तीति चेन्न । षड्लक्षणयोगिष्वेव सप्तत्वप्रसक्तेरप्रकृतत्वेन प्रतिषेधे अविवादात् । एतदतिरिक्ते नास्तीति चेन्न । प्रतीत्यप्रतीतिभ्यां व्याघातात् । भावानां षड्लक्षणपरित्यागो नास्तीति नियमार्थ इति चेन्न । षण्णां तत्त्वादेव । सर्वेषामिति चेन्न । षड्लक्षणयोग्याभिप्रायेण सर्वशब्दप्रयोगे तत्त्वादेव । अतिरिक्ताभिप्रायेण च व्याघातात् । सामान्याकारे असिद्धत्वात् । अपिच प्रत्येकलक्षणाभिप्रायेण परित्यागस्य सत्वात् । समुदितानामप्येकत्रासत्त्वेऽयोगनिषेधानुपपत्तेः । अन्यतमाभिधाने तु सर्वेषामेव विपक्षेऽभावदर्शनेन व्याघातात् ।

अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वात् भावप्रपञ्चवत् । कारणाभावेन कार्याभावस्य सर्वमतसिद्धत्वादुपयोगित्वसिद्धेः । न चेदेवं भावोऽपि कश्चि-

न्नाभिधातव्य इति पञ्चैवाभिधातव्याः पारतन्त्र्यादिति चेन्न । समवायादे-रप्यनभिधानप्रसङ्गात् ।

तमस्तु[1] भावान्तरं निषेधत्वेनानवभासमानत्वात् । बाधकाभावेन चारोपा-नुपपत्तेः । आलोकाभावे चाक्षुषत्वं नास्तीति बाधकमिति चेन्न । तस्यालो-काभावव्यञ्जनीयत्वात् । अन्यथारोपानुपपत्तेः । भावत्वे यदि द्रव्यान्तरं नवैवेति व्याघातः । अद्रव्यान्तरत्वं सर्ववादिनिषिद्धम् । अथ गुणान्तरं चतुर्विंशतित्वव्याघात इति मेयान्तरमेव तमः । अत्रैव संग्रहश्लोकः—

नाभावो भाववैधर्म्यान्नारोपो बाधहानितः ।
द्रव्यादिषट्कवैधर्म्याज्ज्ञेयं मेयान्तरं तमः ॥

क्षणावच्छेदकश्चोपाधिः क्षणिक इति षट्पदार्थाः । विधर्मेत्यतोऽपि नियमासिद्धिः ।

शक्तिश्च मीमांसकानाम् । अत्रैव संग्रहश्लोकः—

न द्रव्यं गुणवृत्तित्वाद् गुणकर्मबहिष्कृता[2] ।
सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि सा ॥

अत एव ज्ञाततापि वैशिष्ट्यं च । कथमन्यथा भावाभावयोर्वैशिष्ट्यस्या-वगमः । यथा वैशिष्ट्ये तथा स्वरूपेणैवेति चेन्न । समवायापलापप्रसङ्गात् । अधिकस्तत्र प्रवाहो हीयते न प्रतीयमान इति चेन्न । अभावेऽपि तुल्यत्वात् । बाधोऽत्रास्तीति चेन्न । तदनभिधानात् । ततो भावाभावयोरपि तत्स्वीकारो दुर्वार एव । दण्डी पुरुष इति प्रतीतेश्च । शब्दमात्रमिदमितिचेन्न । इहायमित्या-दावपि[3] तथात्वप्रसङ्गात् ।

आधाराधेयभावश्च मेयान्तरम् । संयोगसमवायावेव सप्तमीप्रथमाभ्याम-भिलप्यमानसंबन्धिनौ तद्व्यहारहेतू इति चेन्न । इहायमितिप्रतीतिवैचित्र्यात् । शब्दमात्रत्वे तु संबन्धापलापप्रसङ्गात् ।

सादृश्यं च[4] गुणवृत्तित्वान्न द्रव्यगुणकर्मात्मकं । नापि सामान्यम् । तद्धि

१ °तमश्च भा° २ °बहिर्गता । सा° इति पाठान्तरम् । ३ °त्यादेरपि° । ४ °श्यं तु गु° ।

व्यक्तिदर्शनमात्रवेद्यं वा प्रतियोगिग्रहणवेद्यं वा । नाद्यः । प्रतियोगिनोऽनवभासे सादृश्यबुद्धेरभावात् । अस्त्येव च बुद्धिर्न व्यपदेशभागिनीति चेन्न । ब्राह्मणत्वादेरपि निर्विकल्पकबुद्धिवेद्यत्वापत्तेः । नान्त्यः । अवयवसामान्यानां प्रागेव ज्ञानात्सामान्यस्य च सामान्यान्तरेऽभावात् । सादृश्यव्यवहाराभावापत्तौ मेयान्तरत्वादिति । मैवम् ।

भावत्वाधिष्ठिताः सर्वाः प्रत्येकं व्यक्तयो मताः ।
द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः ॥

भावत्वाधिष्ठानैकैकव्यक्तिमात्रे षड्लक्षणानां मिलितोऽयोगो व्यवच्छिद्यते नतु मिलितानामयोगः । अयोगश्चान्यत्रावगतोऽत्र समारोप्य निषिध्यते भूतले चैत्रवत् । ततश्च षड्लक्षणवदेव भावजातीयं मेयं वाच्यमेवेतिवत् अयोगव्यवच्छेदस्य पदार्थान्तरे भावत्वं नास्तीत्यन्ययोगव्यवच्छेदस्य वा विभागार्थत्वात् ।

अभावस्य च समानतन्त्रसिद्धस्याप्रतिषिद्धस्य **न्यायदर्शने** मानसेन्द्रियतासिद्धिवदत्राप्यविरोधात् । अभ्युपगमसिद्धान्तसिद्धत्वात् । नीलं रूपमिति प्रतीतिश्च तमोविषयिणी यद्यपि अपसारितबाधा तदा रूपमेव तमो, न द्रव्यादिवैधर्म्यम् । अथ संभवद्बाधा तदा आरोप एव, स्वप्नावभातनीलिमवत् । अथ रूपाश्रयत्वबुद्धिः तमसि तदा बाधाबाधाभ्यां न पदार्थान्तरत्वम् । क्षणावच्छेदकश्चोपाधिरन्त्यशब्द एव । स चोपान्त्यशब्दनाश्यः । नच तस्यैवोत्पादनाशहेतुत्वे युगपद्विनाशोत्पादप्रसङ्गः । अन्त्यशब्दसहकृतस्यैव तस्य नाशहेतुत्वात् । एतेन प्रध्वंसाहेतुकत्वमपास्तम् । अत्र च **टीका**—'यथान्त्य उपान्त्येन' इति कार्यकारणविरोधिव्याख्यानावसरे इत्येके । तन्न । एवं सति ज्ञानादिषु द्वित्रिक्षणावस्थायित्वव्यवहारो न स्यात् । देशान्तरोदीरितान्त्यशब्दोपाधिकोऽसाविति चेन्न । उपाधेरनिश्चयेनान्यत्र निश्चयेन व्यवहारानुपपत्तेः । अवष्टब्धदेशविभागाभावोपहितः सूर्यपरिस्पन्द इत्यन्ये । स्पन्दस्य स्वरूपाभेदेऽपि विभागाभावविभागतत्पूर्वसंयोगनाशोत्तरसंयोगात्मकोपाधिचतुष्कान्यतमः क्षणव्यवहारहेतुरित्यपरे । तथा च **टीका**—'निमेषस्य चतुर्थो भागः क्षण' इति । तन्न । तत्राभावस्वरूपं वोपाधिः, कर्मस्वरूपं वा, तयोः संबन्धो

वा । नाद्यौ । तयोरनेककालव्यापित्वात् । नान्त्यः । तस्यानेककालव्यापित्वे क्षणव्यवहारविरोधात् । एकक्षणावस्थायित्वे च क्षणिकत्वापत्तेः । समानाधिकरणौ सूर्यसंयोगविभागावित्यन्ये । तन्न । एतद्रूपद्वयं वा क्षणोपाधिरनयोः संबन्धो वा एतेषां मेलको वा । नाद्यौ । तयोरनेककालव्यापित्वात् । न तृतीयः । तस्यैव क्षणिकत्वस्वीकारात् । सत्यं, किं पुनः क्षेणसिद्धौ मानं, क्षणवेदनम् । किं क्षणवेदनम् । अस्तमितपूर्वापरभाववस्तुवेदनं वा क्रियावेदनं वा तत्कार्यप्रागभाववेदनं वा तदुभयसंसर्गवेदनं वा । नाद्यान्त्यौ । असिद्धेः । नापरौ । तयोः स्थिरत्वात् । नानाक्षणवर्तिनो घटादय इति प्रत्यक्षादेव क्षणनिरीक्षणमस्तीति चेन्न । क्रमिकसंयोगविभागाद्युपाधित एव तत्प्रतीतेः । अनुमानादस्तीति चेन्न । लिङ्गाभावात् । क्षणप्रयोगात्तदनुमानमस्तीति चेन्न । निरूपिते वस्तुनि क्षणशब्दप्रयोगः, तस्माच्च तदनुमानमितीतरेतराश्रयात् । न च प्रत्यक्षानुमानयोरभावे मानान्तरावकाशः । ततो मानाभावान्नास्त्येव क्षणिकः क्षणः इति । किं तदा तद्व्यपदेशबीजम् । ज्ञानविशेषः । कस्तस्य विषयः । कर्मरूपं तज्जनितविभागप्रागभावादिरूपश्चोपाधिः । केवलेऽपि तर्ह्युपाधावुपाधिमति च तद्व्यवहारप्रसङ्गः । विशिष्टमिति चेन्न । किं वैशिष्ट्यं, ज्ञानविशेषस्तस्य चान्यदाभावान्न व्यवहारः । तदभावश्च तत्सामग्रीविरहात् ।

रवेः स्पन्दक्षणस्तस्य नानाक्षणविशिष्टता ।
क्रमिनानाविधोपाधिसंबन्धः परिकीर्त्यते ॥
असंबद्धेषु तत्त्वेषु ज्ञानं संबन्धवत्पुनः ।
स्वभावनियमेनैव तत्संबन्धफलार्पकम् ॥
अतिप्रसङ्गदोषस्य निराकरणकारणम् ।
वैशिष्ट्यमिति निर्व्यूढं तदेवात्र व्यवस्थितम् ॥

स्वविषयेणोपाधिना तद्वता वा सहकृतं क्षणज्ञानं विशिष्टव्यवहारसमर्पकम् । यदा तु तदुभयसहकारिसंपन्नं न भवति तदा केवलव्यवहारं करोति न विशिष्टव्यवहारमिति ।

१ ०योः समवायो वा० । २ ०क्षणिकसि० ।

शक्तिरपि न पदार्थान्तरम् । प्रमाणाभावात् । अर्थापत्तिस्तत्र[1] मानमिति चेन्न । अन्यथैवोपपत्तेः । मणिमन्त्रादिना दाहप्रतिपक्षभूतस्य क्षेत्रज्ञसमवायिनोऽदृष्टभेदस्योत्पादनात् । अग्न्यन्तरेणापि तर्हि तस्य पुरुषस्य दाहो न स्यादिति चेत् । न । प्रतिनियताग्निसाध्यदाहप्रतिपक्षभूतस्यैवादृष्टस्य[2] जननात् । औषधिलिप्तकाष्ठादिषु कथमदाह इति चेन्न । तत्राप्यौषधलेपकारिपुरुषसमवेतादृष्टस्य दाहप्रतिपक्षभूतस्योत्पादनात् । प्रतिपक्षसंनिधानोत्पादकादृष्टविशेषस्य वा दाहप्रातिकूल्यं, अदृष्टविशेषार्जितकरतलानलसंयोगस्य वा दाहप्रतिपक्षत्वम् । स च विशेषो दाहादाहाभ्यामेव कल्पयिष्यते । विवादास्पदं स्वरूपमात्रसंबन्धं[3]सापेक्षं जनकत्वात् आत्मवदिति चेन्न । अत एव संस्कारादृष्टसापेक्षत्वप्रसङ्गात् । तत्रात्मत्वमुपाधिरिति चेत्तुल्यं प्रकृतेऽपि । शक्तेरपि शक्त्यन्तरापेक्षायामनवस्थितेः । अनपेक्षत्वे तथैव व्यभिचारात् । जननशक्तियोग्यत्वं जनकत्वमिति चेन्न । असिद्धेः । तस्माद्विवादाध्यासितं न निजरूपमात्रसंबद्धातीन्द्रियसापेक्षं प्रमाणेन तथानुपलभ्यमानत्वात् । यत्प्रमाणेन यथा नोपलभ्यते न तत्तथाभूतं, यथा नीलं न पीतं रूपम् ।

नापि ज्ञातता । निराकरिष्यमाणत्वात् । नापि वैशिष्ट्यम् । घटाभावभूतलयोस्तदननुभवात् । इह भूतले घटो नास्तीति व्यपदेशमात्रम् । असति संबन्धेऽत्र घटाभावो नान्यत्रेति व्यपदेशे किं नियामकम् । एतद्भूतलसंबन्धेन प्रतियोगिना अभावनिरूपणम् । दण्डिपुरुष इत्यत्र तु गुरुत्वप्रतिबन्धकत्वं पुरुषस्य दण्डाधारत्वं प्रतीयते व्यपदेशमात्रं वा । विपरीतस्तु न व्यपदेशोऽनभिधाननिरस्तत्वात् । तद्धि तस्य "विशेषणं विशेष्यं च तत्संबन्धफलार्पकम् । ज्ञानरूपं स्वसामर्थ्याद्वैशिष्ट्यमिति कीर्तितम् ॥"

आधारत्वं तु गुरुत्वप्रतिबन्धकत्वं क्वचित्समवायिकारणत्वमभिव्यञ्जकत्वं वेत्यूहनीयम् । अन्यथा तस्योभयवृत्तित्वेनोभयत्रापि सप्तमी स्यात् । एकवृत्तित्वे च संबन्धत्वव्याकोपः ।

नापि सादृश्यम् । तद्धि सामान्यादेरनेकवृत्तित्वम् । तच्चैकव्यक्तिग्रहणसम-

---

१ °त्तिरत्र° । २ °स्य उत्पादनात् । औ° । ३ °बन्धातीन्द्रियसा° ।

येऽगृहीतमपि प्रतियोगिग्रहेऽवगम्यत इति सिद्धं षडेव पदार्था इति । विचारासहत्वाच्च । तथाहि तत्स्पर्शवन्न वा । नेति पक्षे एकवृत्ति न वा । आद्ये द्रव्यत्वम् । द्वितीये गुणकर्मविशेषान्यतमत्वम् । शेषे संयोगसामान्यसमवायविभागान्यतमत्वम् । गुणवृत्तित्वादि गुणादित्वे न स्यादिति चेत् । गुणवृत्तित्वादि गुणादित्वे न स्यादिति किं प्रसङ्गमात्रम्, अथ गुणवृत्तित्वादेः स्वीकृतपदार्थातिरेकसाधनम् । नाद्यः । स्वतन्त्रतर्कस्यादूषकत्वात् । नेतरः । उक्तरूपचतुष्टयबहिर्भावस्य षट्पदार्थातिरेकित्वस्य विरोधादशक्यसाधनत्वात् ।

नन्वेवमपि न्यूनत्वम्[1] । तथाहि क्षित्यादिकं द्रव्यत्वाद्गुणवत्त्वाद्वा भिद्यते । नाद्यः । तदसिद्धेः । अनुगतमतेः संदिग्धत्वात् । स्वातन्त्र्यधीरियमिति चेन्न । शब्देऽपि तत्सत्वात् । समवेतत्वेनैव चावयविनामवसायात् । नापि गुणवत्वात् सङ्ख्यादिसाधारण्यात् रूपादिषु गुणत्वस्यैकस्यासिद्धेः । भिन्नरूपस्य भागासिद्धेः आदित्वस्यैव प्रतिक्षेपात् । अन्यतमत्वस्य भागासिद्धेः । असमवायिकारणत्वेन गुणकर्मणोररूप्येकत्वे षडेवेति नियमानुपपत्तेः । कार्याश्रयत्वं यज्जातिपुरस्कारात्तत्द्द्रव्यत्वं भेदकमिति चेन्न । तां विनापि तदुपपत्तेः । अकार्यजात्याश्रयत्ववत्कारणत्वमसति बाधके सामान्य एव पर्यवस्यतीति चेन्न स्पर्शसमवायिकारणतया क्षित्यादिषु प्रतिनियतसामान्यापत्तेः । नापि गुणत्वं, तस्योपदेशं विना अप्रतीतेः । उपदेशश्च गुणशब्दसंकेतो, न चासौ व्यक्तिषु शक्यो, व्यभिचारात् । नाप्युपलक्षणान्तरेण । कर्मव्यावृत्तेरशक्यत्वात् । तदन्यत्वस्यानपेक्षितव्यावृत्तिरूपत्वेन रसान्यत्ववदनादेयत्वादिति त्रयाणामेकीभावेन षडेव पदार्था इति चेन्न । कालाकाशादीनां संयोगविभागजनकत्वेन कर्मवत्सत्तेतरजातिमत्त्वसिद्धेः । पृथिव्यादौ तु स्पर्शसमवायिकारणत्वनिर्वाहकजातिस्वीकारे जातिसंकरप्रसङ्गो बाधकः । न च कर्मत्वमसिद्धम् चलतीत्यनुगताकारवेदनवेद्यत्वात् । न चानुगतबुद्धिगम्या जातिस्तदपायाद्व्यावर्तते । गृहीतसमयस्य रत्नतत्त्ववद्भानात्[2] । प्रतारणैवेयमिति चेत् । न । रत्नशास्त्रेऽपि प्रतारणापत्तेः । तदार्षमिति चेत्तुल्यम् । न चेदेवमेकव्यक्तिजनकत्वे

१ °नता । त° । २ °द्भावात् ।

व्यक्त्यन्तरे तद्बुद्धिविरहापत्तिः । भावे वा सर्वव्यक्तिष्वतिप्रसङ्गः । कतिपयव्यक्तिनिष्ठत्वं तु यदि जातिमन्तरेण तदानियतानामेव व्यक्तीनां समानाकारविकल्पजननसामर्थ्यादेकजातीयताव्यवहारोऽस्त्विति जात्यपह्नवप्रसङ्गः । गुणत्वं च रूपादयो रूपत्वादिव्यतिरिक्तान्तरजातिमन्तः सामान्यवत्त्वात्कर्मवत् । उपदेशश्च यत्र सामान्यवत्त्वे सति संयोगविभागात्मककार्यद्वयाभावस्तद्गुणत्वव्यञ्जकमित्यसाधारणव्यञ्जकविषयोऽतो नान्योन्याश्रयः । यत्र विशुद्धसंततिजन्यत्वं तत्र ब्राह्मण्यमितिवत् अर्थत्वमपि स्यादिति चेन्न । तस्य सत्तासंबन्धित्वपर्यायत्वात् । अन्यथा बुद्धित्वज्ञानत्वादिनानासामान्यापत्तेः । न चात्र व्यतिरेकशङ्का निरुपाधित्वादिति न न्यूनम् । **षडेव पदार्था इत्युद्देशः ।**

पृथिवी तावत्पृथिवीत्वजातियोगान्न भिद्यते । तत्र मानाभावात् । पृथिवीत्यनुगतव्यवहारादिति चेन्न । घृतादौ तदभावात् । तत्रापि निपुणेनोपलभ्यते इति चेत् । न । जलादावपि तुल्यत्वात् । सन्देहेऽपि भागासिद्धत्वात् । गन्धवत्त्वात्तदनुमानमिति चेन्न । तस्य वाय्वादिसाधारण्यात् । वाय्वादावौपाधिकी गन्धप्रतीतिरिति चेन्न । चम्पककर्पूरभागानामनागमनात् । आगमने वा चम्पकदलानां सच्छिद्रताप्रसङ्गात् । कर्पूरे च भवनोदरमधिवासयति माषकादित्रुटिप्रसङ्गात् । न चापरपरमाणुप्रवेशात्तुल्यायव्ययत्वमिति[1] वाच्यम् । एकमाषस्याव्ययताप्रसङ्गात्[2] । नापि पाकजः स्पर्शः, पाकजत्वासिद्धेः । पार्थिवविशेषगुणत्वात्तत्सिद्धिरिति चेन्न । व्यावर्त्यजलरूपसंख्यादीनामपाकजत्वाप्रतीतौ विशेषणवैयर्थ्यात् । अवैलक्षण्यात्तत्प्रतीतौ त्वत्रापि तद्विपर्ययावसायात् बाधः । विशेषगुणत्वं च एकद्रव्यवृत्तित्वं कतिपयद्रव्यवृत्तित्वं वा । नाद्यः । स्पर्शस्यानेकद्रव्यवृत्तित्वात् । पाकजत्वविशेषणान्नैवमिति चेन्न । तस्यैवासिद्धेः । द्वितीये तु वेगे नैव व्यभिचारः[3] । ततः पृथिवीमात्रभेदग्राहकप्रमाणाभावात् पृथिवी नेतरेभ्यो भिद्यते इति । मैवम् । अस्ति तावद्गन्धं प्रति गन्धवतां समवायिकारणत्वम् । न चैतन्नानाव्यक्तिनिष्ठं, सति भावमात्रस्याहेतुत्वात्[4] । सावधारणस्य च व्यभिचारात्तास्वसिद्धेः । ततस्तत्प्रयोजकजातियोगित्वमा-

---

१ °ति न्याय्यम्° । २ °स्याक्षय° । ३ °चारात्° । ४ °तुलात्मकलात्° ।

स्थैयम् । तदेव च पृथिवीत्वम् । न च गन्धवत्त्वमेवातिप्रसङ्गीति वाच्यम् । अनिलादौ चम्पकगन्धिकर्पूरगन्धीत्युपाधिसंबन्धेनैव कुङ्कुमारुणा तरुणीतिवत्प्रतीतेः । न चैवमव्ययतापत्तिरिति वाच्यम् । अङ्कुरदशामारभ्य यथान्वहमदृष्टाकृष्टैर्भागैरुपचयाद्विविधशाखाभिराकाशदेशव्यापकत्वं तरोर्नतु च्छेदे सति । तथेहापीत्यतो विशेषात् । अत एव न चम्पकादौ सच्छिद्रतापत्तिरपि । वायोर्गन्धवत्त्वे [1]प्रत्यक्षस्पर्शवतश्चाक्षुषतापत्तेः । रूपवत्त्वं प्रयोजकमिति चेन्न । गुणादावभावात् । न च स्पर्शोऽप्यपाकज एव । सुखासुखादौ सतततपनकरसंयोगे स्पर्शभेदप्रतीतिसंभवात् । (अ)न्यत्रापि च तीव्रसुकुमारादिभावेन विशेषप्रतीतेः । यत्र तु न प्रतीयते विशेषस्तत्रापि पार्थिवस्पर्शत्वेनैव रूपादिवदनु[2]मानम् । न चैवं तोयादौ प्रसङ्गः । तज्जातीये क्वचिदपि विशेषाप्रतीतेः । तस्मादेभिरेव लक्षणैः पृथिवीतरेभ्यो भिद्यत इति सर्वं रमणीयम् ।

सा चेयमवयवजन्या नत्वणुसंहतिमात्रम् । स्थूलप्रत्ययस्य परमाणावनुपपत्तौ तदतिरिक्तवस्त्ववलम्बनत्वात् । तथाहि । अणवो नापरोक्ष[3]गोचराः, परमसूक्ष्मत्वादेकाणुवत् । विशिष्टोत्पादादैन्द्रियकत्वमिति चेन्न । तदनभिधानात् । तथा हि । किं चक्षुरादिभिः सहोत्पादो विशिष्टोत्पादः, उत तद्दर्शनजनकतयोत्पादः, अथ तद्दर्शनविषययोग्यतयोत्पादः । नाद्यौ । चक्षुरादिवदणूनां प्रतिभासविरोधात् । दृश्यानां तु महत्वं वा अवयवित्वं वाऽणूनां न संभवति । स्वरूपभेदस्तु अदृश्यरूपसन्ततौ यदि नयनादिसाहित्येनोत्पद्यते तदा अदृश्येन्द्रियादिसन्ततौ दृश्येन्द्रिये[4]क्षणप्रसवप्रसङ्गः । केषांचिदेवादृश्यानां दृश्यजननशक्तिनियमात् । दृश्यजनकत्वं न सर्वेषामिति चेन्न । अणुरूपस्य दर्शनविषयताविरोधे स्वरूपविशेषस्यानुपाधित्वात् । धूमस्व[5]रूपभेदस्येव दहनजन्यत्वे । तथा च पारमर्षं सूत्रम् "नातीन्द्रियत्वादणूनामिति" । स्थूलावभासानुपपत्तेश्च । ननु किं पूर्वापरादिदेशमवष्टभ्य दृश्यानामणूनां सत्वं स्थौल्यं एकस्यैव वा तावद्देशव्यापित्वम् । तत्राद्यं तावत्परमाणुषु संभवत्येव । द्वितीयस्य तु

१ °त्वे उद्भूतस्पर्शस्य चाक्षु° । २ °मानात् ।° ३ °क्षबुद्धिविषयाः । प° । ४ °यल-क्ष° । ५ °मस्वभावभे° ।

नास्त्येवावभासो यस्यानुपपत्तिरिति चेन्न । एकस्थूल इत्यनुभवात् । एक इति विकल्पमात्रमिति चेन्न । अणूनां यथानुभवं निश्चयविषयत्वे अनेकतानिश्चयप्रसङ्गात् । अयथानुभवं[1] तु निश्चयविषयत्वे सर्वत्र प्रत्यक्षोपप्लवप्रसङ्गः । दीपशिखासन्ततावेकत्वनिश्चयवशादिति चेन्न । तत्र विरुद्धधर्मसंसर्गात् । अत्र तु तद्विरहात् । अत्राप्यावृतत्वानावृतत्वविरुद्धधर्मसंसर्ग इति चेन्न । अर्धावरणेऽप्यवयविनोऽनावृतैकरूपत्वात् । अनावृतैकरूपत्वे अर्धावृते प्रागवत्तत्स्थौल्य[2]प्रतीतिप्रसङ्ग इति चेन्न । विचारासहत्वात् । स्थौल्यमवयविरूपं वा तद्धर्मरूपं वा । तत्राद्यं प्रतीयत एव । द्वितीयं तु तत्परिमाणं परिमाणसामान्यविशेषो वा अभिव्यञ्जकभूयोवयवेन्द्रियसन्निकर्षमोषान्न प्रतीयते, न त्ववयविन आवरणात् । अवयविरूपावभासेऽप्यनावरणदशावदर्धावरणेऽपि द्विहस्तत्वैकहस्तत्वादिकं प्रतीयेतेति चेन्न । द्विहस्तावच्छेद्यपरिमाणसमवायौ वा तथाविधावयवसमवायो वा । अवयविनो द्विहस्तादिकं धर्मभूतं न धर्मिस्वरूपम् । धर्मिप्रतीतावपि च धर्माणां प्रतीतिर्व्यञ्जकाभावादुपपत्स्यते । अस्तु तर्हि सकम्पत्वनिष्कम्पत्वमिति चेन्न । भागभागिनोर्भिन्नसामग्र्यधीनकम्पत्वेन भागानां कम्पितत्वे[3]ऽपि भागिनो निष्कम्पैकस्वभावत्वात् । चलाचलयोर्युतसिद्धिप्राप्तिरिति चेन्न । भेदो युतसिद्धिरसंबन्धो वा । नाद्यः । इष्टत्वात् । न द्वितीयः । चलाचलत्वेऽपि नित्यसंबन्धबलेनैवासंबन्धिविरोधात् । अनित्यसंबन्ध एव युतसिद्धिरिति चेन्न । चलाचलत्वस्य तेन प्रतिबन्धाभावात् । तत्र हि तेन व्यभिचारानुपलम्भो वा प्रतिबन्धनिश्चयहेतुर्वा व्यभिचारे बाधकं वा । नाद्यः । भौमत्वस्य लोहपाट्यत्वेनैव व्यक्त्यन्तरे व्यभिचारानिश्चयेऽपि तच्छङ्कया नियमनिश्चयहेतुत्वाभावात् । नेतरः । तदसिद्धेः । अन्यथा चलाचलयोर्वस्त्रोदकवन्न भागभागिकल्पनागोचरत्वमपि स्यात् । आक्रान्तदेशविभागेऽपरदेशावष्टम्भः कल्पो भागिनि प्रत्यक्षसिद्धः, पाणौ भागान्तरे तु नैवमिति चेन्न । आक्रान्तदेशभेदेनैव केनचित्संयोगेऽपि केनचिदसंयोगोपपत्तेः । अस्तु तर्हि महारजनसंयोगासंयोगौ विरोध इति चेन्न । विकल्पानुपपत्तेः । किं

१ °भवस्तु नि° । २ °त्स्थौल्योपलम्भप्रसं° । ३ °कल्पित° ।

यस्य संयोगसमवायित्वं तस्य तदभावसमवायित्वं विरुध्यते, अथ यस्य संयोगजनकत्वं तस्य तदभावजनकत्वं, उतैकस्य संयोगतदभावावच्छेदकत्वं, उभयावच्छेद्यत्वं वा। नाद्यौ। असिद्धेः। न तृतीयः। महारजनस्यैकस्योभयावच्छेदकत्वात्। न तुरीयः। ज्ञानस्यैवोभयावच्छेद्यत्वात्। किंचिदेव केनचिन्निरूप्यते स्वरूपनियमादिति चेत्तुल्यम्। यदि भावाभावावेकेनैव निरूप्येते सर्वेषामेव भावाभावानामेकदेशनिरूप्यत्वं भवेदिति चेन्न। भावाभाववैचित्र्यादिति मूकीभव। **इति पृथिवी।**

शुक्लमेव रूपमपामिति न संगच्छते, नीलिमादेरप्युपलम्भात्। औपाधिकं तच्चन्द्रमसीव शैत्यमिति चेन्न। बाधकाभावात्। अन्यथा धर्मधर्मिव्यवहारविरहापत्तेः। वियति विक्षिप्तानामेव कालिन्दीजलानां धवलिमप्रतीतिर्बाधिका इति चेन्न। तत्रापि तेजस एव धवलिम्नः उपाधिभावसंभवात्। नीलिमापि तर्हि प्रतीयेत, घटादाविव तेजोमध्यवर्तिनीति चेन्न। पित्ताभिभूततेजसः शैत्यवन्नीलिम्नोऽप्यप्रतीतेरुपपत्तेः। स्फटिकादिवद्वा। नापि मधुर एव रसो, नियामकाभावात्। तिक्तादिविलक्षणवेदनमेव माधुर्यवेदनमिति चेन्न। मधुरादिविलक्षणवेदनमेव हि तिक्तादिवेदनमित्यपि तुल्यत्वात्। क्वचिद्लवणतापि स्यादिति चेत्। तुल्यं मधुरतायामपि। तद्विपरीतवेदनेऽरसत्वमेव स्यादिति चेन्न। अनुष्णाशीतस्पर्शवत्सप्तमेनाप्युपपत्तेः। जम्बीरकरवीररसादावम्लतिक्तवेदनाच्च। स्वाश्रयप्रत्यासत्त्या तदुपलम्भ इति चेन्न। आप्यत्वे बाधकाभावात्। अन्यत्र तद्विरहेणैवापामुपलम्भादिति चेन्न। पृथिव्या अपि मधुरताया आप्यत्वापत्तेः। अन्यत्र तद्विरहेणैव क्षितेरुपलम्भात्। स्नेहवत्। नापि शीत एव स्पर्शः। मध्यंदिने जलस्यौष्ण्यस्योपलम्भात्। तैजसं तदौष्ण्यमिति चेन्न। रूपाध्यक्षताव्याप्तत्वात् स्पर्शप्रत्यक्षतायाः। वारिस्थतेजोरूपं प्रत्यक्षमिति चेन्न। तिमिरे उष्णोदकचाक्षुषतापत्तेः। तदा क्वचित्स्वभावतोऽप्युष्णतोपलभ्येतेति चेन्न। कनकादिद्रवत्ववत् नैमित्तिकत्वेनाप्युपपत्तेः। रूपस्य तेजःसंयोगजन्यत्वे कथं स्पर्शस्येति चेन्न। रूपस्य तादृशत्वे द्रवत्वेऽपि

१ °विपरीतवे°।

तुल्यत्वात् । नापि स्वाभाविकं द्रवत्वम् । करकादावभावात् । अस्त्येव तत्रापि परं तत्प्रतिबद्धमिति चेन्न । घृतादावपि तुल्यत्वात् । तैलेऽपि सत्वाच्च । तदाप्यमेव द्रवत्वमिति चेन्न । तत्राप्यसंबन्धे तैलस्य दहनप्रतिकूलतापत्तेः । उपष्टम्भकमाहात्म्यान्नैवमितिचेन्न । तप्ततपनीयद्रवत्वस्यापि पार्थिवतापत्तेः । उक्तयुक्तेरेवाग्निसंयोगाविनाश्यत्वोपपत्तेः । यद्यद्विरुद्धं तत्तत्कथं तदनुकूलं स्यादिति चेत्तुल्यम् । नापि स्नेहोऽपामेव घृतेऽपि दर्शनात् । आप्यभागस्य स इति चेन्न । द्रवत्वस्यापि तथात्वप्रसङ्गात् । क्षितिपयसोरभेदे गन्धानुपलम्भो बाधक इति चेन्न । नियतावान्तरजातिवृत्तित्वेनाप्युपपत्तेः । अभेदः कथमिति चेन्न । भेदप्रतिपादकमानाभावादिति मूकीभव । जलमेतन्न पृथिवीति चेन्न । घृतमेतन्न पृथिवीत्यत्रापि तुल्यत्वात् । मैवम् । शुक्लमेव रूपमपां लक्षणमिति । न च तेजसा नीलिमाभिभवः । घटादावभावात् । न च स्वाच्छ्ययोगात्स्फटिकवदिति वाच्यम् । इन्द्रनीलादावभावात् । रसोऽपि मधुर एव । कषायद्रव्येण जलमाधुर्यस्योपलम्भात् । तथाहि । स्नातकस्य हरीतकीस्वादानन्तरं वाराणसीपरिसरे कमण्डलुपरिस्खलदमलजाह्नवीजल[1]विमलधारासु मधुराकारा मनीषोन्मिषति । न च कषायद्रव्यस्यैव तत् । रसान्तराणामप्युपलम्भापत्तेः । न च जलेनैव तत्र माधुर्यमुत्पाद्यते । पृथिवीरसस्याकारणगुणपूर्वकस्य पाकजत्वनियमात् । न च हरीतकीमाधुर्यस्य प्रकर्ष एवाम्भसा व्यज्यते । तदीयकषायादिरसानां जलानभिव्यङ्ग्यत्वदर्शनात् । ततो घृतस्य कुङ्कुमगन्धाभिव्यञ्जकतावदस्यापि जलमाधुर्यव्यञ्जकत्वम् । यदि वा शरदि विमलजलदव्यूहनिर्गलविमलजलधारासारसंचारिनभस्तलनिहितविमलभाजनसंभृतमपगतविविधोपाधिव्याधिसंभेदममृतद्रवप्रतिममानन्दजनकमम्भोऽनुभूयते । किंवा जलरसस्य मधुर[2]भाववैलक्षण्यं किमनुभूयमानजातिविरहः उत शर्करादिमाधुर्यवैजात्यम्, अथ तेनैकजातीयताविरहः, उत मधुरशब्दवाच्यत्वं वा । नाद्यौ । अनुभवबाधितत्वात् । नेतरः । अविवादात् । न तृतीयः । उत्कटसादृश्याद्यननुभवेऽपि मधुरतामात्रस्यान्नादिसाधारण्यस्यानुभवात् । अन्यथा मेरुसर्षपयोरपि

१ °जलाविरलधा° । २ °रतावै° ।

सत्ताविलयापत्तेः । न तुरीयः । व्यवहारबाधितत्वात् । न च पृथिव्यां मधुरता आप्या । शुष्यत्सु शर्करादिषु माधुर्यापकर्षस्यानुपलम्भात् । शुष्यति द्रव्ये पुनः स्नेहापकर्षात् । नाप्युष्णः स्पर्शः । औपाधिकत्वात् । मेदस्विस्वेदार्थकतेजसीव रूपानवभासेऽपि स्पर्शप्रतीतेरविरोधात् । आप्यद्रवत्वस्यापाकजत्वाव्याप्यत्वात् । न च कनकद्रवत्ववन्नैमित्तिकत्वं, न च घृतद्रवत्वप्रतिबन्धाग्रहः । तस्याप्यत्वे पाकापेक्षाविरोधात् । तैले चाप्यभागस्य स्नेहप्रकर्षवत्त्वेन दहनानुकूलत्वात् । आप्यमेव द्रवत्वं घृतद्रवत्वस्य पाकजत्वेन पार्थिवत्वात् । एवं च स्नेहोऽपामेव । घृतस्नेहः पार्थिवः भौमानलेन्धनत्वादिति चेन्न । प्रकर्षविशेषादेव स्नेहस्य दहनानुकूलतोपपत्तेः ॥ **इति जलम् ।**

शुक्लमेव भास्वरं रूपं तेजस इत्यसंगतम् । अग्नेररुणकपिलादिरूपोपलब्धेः[1] । कनकरूपस्य चाभास्वरत्वात् । संयोगिपार्थिवरूपाभिभूतत्वेन तत्राभास्वरत्वमिति चेन्न । पार्थिवरूपस्य तेजोरूपानभिभावकत्वात् । अन्यथा घृतादावपि[2] तथाभावप्रसङ्गेन रूपाप्रत्यक्षतापत्तेः । अनुद्भूतं तदिति चेन्न । अग्रहणप्रसङ्गात् । रूपं न गृह्यत एवेति चेन्न । रूपस्पर्शयोस्तैजसयोरग्रहे कनकद्रव्यस्याप्रत्यक्षतापत्तेः । अभास्वरं तदिति चेत् । सिद्धं नः समीहितम् । नाप्युष्ण एव स्पर्शः । पद्मरागादितेजसामनुष्णाशीतत्वात् । पार्थिवौपाधिकी सा स्पर्शप्रतीतिरिति चेन्न । रूपानवभासे तदनवभासात् । अन्यथा वायुस्पर्शविलयात्[3] । औष्ण्यमेव तदनुद्भूतमिति चेन्न । अनुष्णाशीतमात्रविलयात् । मैवम् । अग्नेररुणादिरूपप्रतीतेरौपाधिकत्वात् । कनकरूपं च पार्थिवरूपाभिभूतमेव हीनत्वात् । तेजोंशहीनतायाः कार्यैकगम्यत्वात् । प्रभास्पर्शस्त्वतीन्द्रियोऽनुमानादुष्ण एव तेजस्त्वादवगम्यते ।

ननु सुवर्णं कथं तैजसम् । अत्यन्ताग्निसंयोगेनानुच्छिद्यमानद्रवत्वादिति[4] चेन्न । संदिग्धासिद्धत्वात् । किमिदमेव द्रवत्वाधिकरणं द्रवत्वाधारद्रव्यान्तरसंयुक्तं वेति । अनुभवसिद्धं द्रवत्वाधारत्वमिति चेन्न । सिद्धं तदा पार्थिवत्वम् ।

---

१ °ररुणादिरू° । २ °था घटादा° । ३ °वायौ स्प° । ४ °द्रवत्वाधिकरणत्वादि° ।

पीतिमगुरुत्वाधिकरणत्वस्यापि तथात्वात् । तदा औपाधिकत्वेन शङ्कितमिति चेन्न । तुल्यं द्रवत्वेऽपि । मैवम् ।

पीतिमा च गुरुत्वं च दाहे यस्य च रक्तता ।
तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते ॥
अनुच्छिन्नद्रवत्वं तु वस्तु यत्त्विह भासते ।
सुवर्णव्यवहारोऽयं तन्त्रशास्त्रे प्रवर्तते ॥
वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यं प्रवर्तते ।
रसः स्वभावमधुरो ध्वनिश्च मधुरो यथा ॥
भूसंसर्गवशाच्चास्य रूपं नैव प्रतीयते ।
स्फटिकस्य जपायोगाद्यथा रूपं न भासते ॥

न चात्यन्तानलसंयोगे सत्यनुच्छिद्यमानत्वाद्गुरुत्वमप्यभौमं स्यात् । अत्यन्ताग्निसंयोगेन नष्टगुरुत्वस्यैव पुनरुत्पत्त्यविरोधात् काठिन्यवत् । न च द्रवत्वमत्यन्तमुच्छिद्यते । अत्यन्ताग्निसंयोगेऽपि प्रत्यक्षसिद्धत्वात् । गुरुत्वाश्रयस्य भौमत्वे दाहः स्यादिति चेन्न । दाहो यदि भस्मता तदा वज्रेण व्यभिचारः । रूपान्तरापत्तिश्चेद्द्रवत्येव न प्रतीयते च तदा रूपं, तेजोरूपेणाभिभूतत्वात् । प्राकृतरूपापत्तिस्तु अग्निसंयोगनाशादौषधादासादितदाहस्येव देहस्य । **इति तेजः ॥**

ननु वायुसत्त्वे किं मानम्, अध्यक्षमनुमानं वा । नाद्यः, अरूपद्रव्यत्वात् । नापरः, लिङ्गाभावात् । स्पर्शादिचतुष्कं लिङ्गमिति चेन्न । स्पर्शस्य धाराश्र[1]यत्वेनाप्युपपत्तेः । रूपाभावान्नैवमिति चेन्न । उष्णशीतस्पर्शयोरपि वायवीयत्वापत्तेः । तयोरनुद्भूतत्वादग्रहणमिति चेन्न । तुल्यमनुष्णाशीतस्पर्शेऽपि । शब्दश्चोद्भूतस्पर्शवद्वेगवद्द्रव्याभिघातज[2] एव स्यात् । गन्धरूपयोरग्रहणात् नैवमिति चेन्न । अनुद्भूतत्वेनापि तयोरुपपत्तेः । अप्रतिघातान्न पार्थिवमिति चेन्न । धूमवदुपपत्तेः । अप्रतीयमानरसत्वान्नैवमिति चेन्न । अनुद्भूतत्वेन जले द्रवत्वाप्रतीतिवदुपपत्तेः । गुरुत्वाभावान्नैवमिति चेन्न । तदसिद्धेः । अपातात्त-

---

१ °स्य धराश्र° । २ °गवत्पृथिवीद्रव्या° ।

त्सिद्धिरिति चेन्न । वेगेनैव काण्डादिवदपातसंभवात् । तस्य च सदागतिमत्त्वेन वेगत्यागाभावात् । अन्यथा वायूपनीतजलानलपृथिवीनामपि प्रतीतिवैलक्षण्यात् द्रव्यान्तरताप्रसङ्गात् । कल्पनालाघवाद्धर्ममात्रमुपकल्प्यते न तु धर्मीति चेन्न । तुल्यं वायावपि । धृतिरपि तत्संयोगादेवोपपद्यते । ब्रह्माण्ड इव वा परमेश्वरयत्नादेव स्यात् । कम्पोऽप्येतेन व्याख्यातः । वह्नेस्तेजोविशेषस्योर्ध्वगमननियमवत् भुवोऽपि तिर्यग्गतिरुपपद्यते । अत एव मेघादिप्रेरणं व्याख्यातम् । जठरानलवदेव पार्थिवः कश्चिदन्तःशरीरसंचारी प्राणः स्यादिति न वायुसिद्धिः । मैवम् । त्वगिन्द्रियस्य गन्धाग्राहकत्वेन रसनवदपार्थिवत्वात् । रूपरसाग्राहकत्वेनैवातैजसानाप्यत्वात् । शब्दाग्राहकत्वेनानाभसत्वात् । बहिरिन्द्रियत्वेन मनोव्यतिरेकित्वात् । अत एव ग्राह्यजातीयविशेषगुणवत्त्वेन स्पर्शवत्वाद्द्रव्यान्तरप्रकृतित्वेन वायुसिद्धिः । न च गन्धाग्राहकत्वमप्यदृष्टविशेषसाहित्यात्पार्थिवं स्यादिति वाच्यम् । सर्वेन्द्रियाणामपलापप्रसङ्गात् । स चायं स्पर्शाद्याश्रयः सिद्ध इति । स चान्यत्रापि कल्प्यते लाघवात् । पृथिवीत्वे तु रूपानुद्भवादिकल्पनागौरवमेव । व्यजनानिलश्च ग्राह्यजातीयासाधारणगुणोद्भवापेक्षः स्पर्शव्यञ्जकः सावयवेन्द्रियव्यवस्थापकगुणेष्वेकस्यैव व्यञ्जकत्वात्, आलोकवत् । न चेदेवं मेदस्विनां स्वेदिनामन्धकारे समस्तरूपिवस्त्ववभासः स्यात् । अनुद्भूतस्पर्शानिलस्य तु शैत्याभिव्यञ्जकतापत्तिः । स च स्पर्शो वायवीयः । स्पर्शासाधारणव्यञ्जकत्वात् । त्वक्स्पर्शवदिति वा अपार्थिवत्वसिद्धिः, रूपरहितत्वाद्वा । एवं सति शीतत्वोष्णत्वे अपि गुणौ वायौ स्यातामिति चेन्न । तस्यानुद्भूतरूपत्वात् । न चात्राप्यनुद्भवः पार्थिवरूपस्पर्शयोः समानयोगक्षेमत्वात् । अन्यथा उद्भूतरूपानुद्भूतस्पर्शस्यापि पार्थिवस्य सत्वापत्तेः । न चाभिभवः । मन्दालोके उपलम्भापत्तेः । अगन्धवत्वाच्च । अनुद्भूतत्वात्तत्सिद्धिरिति न वाच्यम् । स्पर्शोद्भवव्याप्तत्वाद्गन्धवत्वोद्भवस्य । कश्चिदेव स्पर्शः तथा, न सर्व इति चेन्न । दृश्यादृश्योपाधिव्युदासे व्यतिरेकशङ्कानवकाशात् । अनभिव्यक्तत्वात्कुङ्कुमगन्धवत्पूर्वं नावभासते, चम्पकादिगन्धसंभेदे त्ववभासत इति चेन्न । व्यञ्जकगन्धातिरिक्तगन्धानवभासात् । चन्दनगन्धिसलिलमितिवदौपाधिकत्वेन प्रतीतेश्च । न चायं ज्वल-

नवदूर्ध्वगमनशीलो वात्यादौ शुकादिनादविसदृशमेघसंघट्टजात्याघातशब्दानुमाने अवश्योन्नेयपरस्पराहतेरेवोद्गमनोपपत्तौ स्वभावकल्पनानवकाशात् ॥

**इत्यनिलः ॥**

ननु बहिरिन्द्रियाणीतरेभ्यो भिद्यन्ते इन्द्रियत्वान्मनोवत् । मनसोऽपि भिद्यन्ते अनात्मगुणग्राहकेन्द्रियत्वात् । घ्राणं पार्थिवं स्यादिति चेन्न । महतः पार्थिवस्य गन्धरूपस्पर्शेषु अन्यतमोद्भूतत्वेन व्याप्तत्वात् । तादृशस्य च प्रत्यक्षबाधितत्वात् । अन्यथा वायावपि पार्थिवस्पर्शस्यैव प्रतीतिप्रसङ्गात् । गन्धस्यैव व्यञ्जकत्वात्तत्वमिति चेन्न । नवशरावादौ जलेऽपि तद्दर्शनात् । जलं गन्धोत्पादकमिति चेन्न । कणाद[1]मते आश्रयनाशं विना तदनुपपत्तेः । तन्नष्टमिति चेन्न । तन्नाशहेतोर्घनद्रव्याभिघातस्याभावात् । स्पर्शस्यापि जलं व्यञ्जकमिति चेन्न । अनुष्णाशीतस्पर्शस्य पूर्वमप्युपलम्भात् । शीतस्पर्शस्य च भूमावसंभवात् । अन्यस्य चाननुभवात् । चक्षुरपि न तैजसम् । तस्य क्रोशादिव्यापिनो रूपस्पर्शयोरन्यतरोद्भवनियमात् । अन्यथा जलजातीयतापि कल्प्येत ।

त्वगपि न वायवीयमिन्द्रियम् । वायोः शब्दस्पर्शधृतिकम्पलिङ्गैकस्वभावस्य[2] तदभाव एवाभावावधारणात् । घ्रा[3]णस्येव प्राणाविति हेतुसंभवात् । उद्भूतस्पर्शस्यैवमिति चेन्न । घ्राणेऽपि तत्त्वप्रसङ्गात् । रसनमपि नाप्यम् । इन्द्रियत्वेनाभौतिकत्वात् मनोवत् । न चेदेवं मनसोऽपि पार्थिवत्वापत्तिः । श्रोत्रं च न स्वगुणग्राहकम् इन्द्रियत्वात् मनोवत् । योग्यविशेषगुणशून्यत्वमत्रोपाधिरिति चेन्न । योग्यविशेषगुणशून्यत्वस्याप्यत एवानुमानात् । इन्द्रियाणि न भौतिकानि इन्द्रियत्वात् मनोवत् । अन्यथा मनोऽपि भूतात्मकमेव स्यात् । अनारम्भकत्वं तत्र बाधकमिति चेन्न । तस्याप्यसिद्धेः । यदा मनः पुरीतति वर्तते तदाल्पमवयविनमा[4]रभतेऽपीत्यविरोधात् । प्रयोजनाभावात्तदसिद्धिरिति चेन्न । सर्वप्रयोजनानामस्मादृशैरनाकलनात् । अपि चान्धतमसं चाक्षुषं, आलोकासहकृतेन्द्रिय[5]ग्राह्यत्वाद्गन्धवदिति । एवमपि तत्सामर्थ्यकल्पानायां चक्षुरेवैकमेवेन्द्रियं

१ कणभक्षम° । २ °लिङ्गस्य तदभाव° । ३ °तु । प्राणस्येव । ४ °रभ्यते°, °रप्स्यते° । ५ °यवेद्यत्वा° ।

देहव्यापकमनुद्भूतरूपस्पर्शमस्तु । तच्च कतिभिरपि भागैः स्वाधिष्ठानवृत्तिबहिर्वृत्ति च स्यादितीन्द्रियनानात्वापलापः । वेद्यपरिष्कृतिपरिच्छेदेनेन्द्रियाणां विषयसहकारित्वं, सर्वत्राभावाग्रहणप्रसङ्गात् इत्यालोकानपेक्षेति चेन्न । अनपेक्षा कथमप्यस्तु, तथाप्येतद्धेतुकचक्षुर्वैजात्यसिद्धेः । कथं तर्हि युगपद्घटतिमिरदीपादीनामुपलम्भ इति चेन्न । क्रमेण मनसा तदधिष्ठाने सूक्ष्मकालभेदसंभवात् तदेन्द्रियाणि मनोवद्द्रव्यान्तराण्येवेति व्याघातः ।

अत्रोच्यते । बहिरिन्द्रियग्राहकमानेनाद्यहेतुबाधात् । यद्यद्ग्राह्यविशेषगुणव्यञ्जकं तत्तद्ग्राह्यविशेषगुणाश्रय एव, यथा वायुतेजसी । न चास्य शङ्कितव्यभिचारित्वम् । दृश्यादृश्योपाधिव्युदासे साध्येतरत्वोपाधेर्बाधैकगम्यस्य तदभावेनाभावे तदनुपपत्तेः । न च जलेन व्यभिचारः । रसस्यापि व्यञ्जकत्वात् । नापि पार्थिवे योग्यतानियमः । तेजोवदनुद्भूतरूपस्पर्शवत्त्वाद्यविरोधात् । न च वायुप्रतिबन्दिग्रहः । तत्र विशेषस्योक्तत्वात् । चक्षुश्च विचित्रमपि स्यादविन्धनतेजोवत् तैजसं, गुणेषु रूपस्यैव व्यञ्जकत्वात् दीपवत् । एवं रसनमपि क्षित्यादेरश्रोत्रत्वे अजसंयोगाभावात् । शब्दद्रव्यत्वनिषेधे श्रोत्रस्य स्वगुणग्राहकत्वात् । न चान्धकारग्राहकमन्यत् । निषेध्यनिषेधयोः समानेन्द्रियवेद्यतानियमात् । व्याघाताच्च । प्रतियोगित्वसहकारित्वस्यापि प्रतिक्षेपात् । मनःप्रतिबन्दिग्रहस्य च मनस्येव निरसनात् । तथापि विशिष्टादृष्टोपगृहीतं गोलकमेवास्तु इन्द्रियं कर्णशष्कुलीवत् । न च व्यवहितोपलम्भापत्तिः योग्यदेशस्थस्यैव ग्राह्यत्वात् । अन्यथा महानिले ऋजुवस्त्वग्रहणाप्रसङ्गात् पवनेन तेजसां दूरमपनयात् तेजोभेदेनैवमिति चेन्न । कराभ्यामप्यनावरणापत्तेः । शाखाचन्द्रमसोः समसमयवेदनात् । न च तद् भ्रान्तं, यौगपद्यमात्रप्रतिक्षेपापत्तेः । तत्र बाधकाभावादितिचेन्न । तुल्यत्वात् । एतेन रसनादिकमप्यपास्तम् ।

त्वगपि देहव्यापी उद्भूतस्पर्शः पवन एवास्तामिति नातीन्द्रियतासिद्धिरिति चेन्न । का देशस्य योग्यता, रूपभेदो वा इन्द्रियप्राप्तिर्वा । नाद्यः । दिगन्तर

१ °द्यप्रच्युतिप° । २ °बाधकैकग । ३ °रसेऽपि° । ४ °निषेधात्° ।

स्थेन सत्यावरणे तदनुपलब्धेः । पुरुषान्तरं प्रति तदावृतमिति चेन्न । एकस्यावृतानावृतत्वविरोधात् । ज्ञातृभेदेनैकस्यैव ज्ञातृपुरोवर्तिकुड्यादिपरापरदेशसंयोगित्वं तत्त्वमविरुद्धमितिचेन्न । आवृताप्रकाशकत्वेन प्रदीपवत्प्राप्यकारित्वसिद्धेः । नेतरः । तत एवाधिष्ठानबहिर्भूतेन्द्रियसिद्धेः । ऋजुवस्तुग्रहोऽपि तस्यातिशयितवेगवत्त्वेनाप्रतिबन्धात् । तस्य फलोन्नेयत्वात् अचिर[1]दीधितिसंयोगवत् । अत एव यौगपद्यस्य भ्रान्तत्वात्त्वगपि चान्यः पवनः । तस्येन्द्रियत्वेनानुद्भूतस्पर्शवत्त्वमनुमानात् । न चात्रानियमाशङ्का, निरुपाधित्वात् । स्पर्शवदिन्द्रियत्वाच्च । रसनादयोऽप्यवयविन इति सिद्धमिन्द्रियम् ॥

ननु शरीरं नाम द्रव्यान्तरं, भूतचतुष्कप्रकृतित्वात् । तथा हि । गन्धवत्त्वात् तत्पार्थिवं यथा तथा जलानलानिलप्रकृतिकमपि, द्रवत्वस्य स्पन्दहेतुत्वात् उष्णतायाश्च पाकहेतुत्वात् । एतेनोष्णं जलं शीतः शीतमयूखरश्मिरित्युपपद्यते । न चैतदुपष्टम्भकसंनिधिप्रयुक्तं, गन्धेऽपि तथाप्रसक्तेः । न च पार्थिवाप्यभागौ न संभूयारभेते विजातीयत्वात् आप्यतैजसभागवदिति साम्प्रतम् । दृष्टान्तस्य साध्यविकलत्वात् । तयोरारम्भकत्वे आरब्धस्यागुण[2]त्वं स्यादिति तत्सिद्धिरिति चेन्न । तदसिद्धेः । शीतोष्णयोर्भास्वराभास्वरयो रसतदभावयो रूपरूपाभावयोर्विरोधोऽस्तीतिचेन्न । एकैकशः सजातीयारम्भेऽपि विजातीयसांनिध्यात् नीलानीलरूपकद[3]म्बस्य विलक्षणरूपजनकत्ववदस्यापि विचित्रकार्यजनकत्वात् । मैवम् । नीलपीतादिरूपकदम्बस्य यथा विचित्ररूपजनकत्वमध्यक्षसिद्धं न तथा पृथिव्यादीनां विजातीयकार्यजनकत्वं, भूजलप्रभवे विलक्षणे वस्तुनि मानाभावात् । ततो गन्धवतां गन्धवत्पृथिवीजातीयजनकत्वनियमात् । जलस्य निर्गन्धजनकत्वनियमस्याविप्लुतत्वात् । एकं शरीरं गन्धवन्निर्गन्धक्षितिजलादिजातिमच्च स्यादिति विरोधात् । किं च कार्यस्य वैलक्षण्यं गन्धवन्निर्गन्धतादात्म्यमुभयबहिर्भूतं वा अन्यतररूपं वा । नाद्यौ, विरोधात् । नेतरः, गन्धवतां गन्धवज्जननात् । अगन्धवतापि अगन्धोत्पादनात् । अन्यतररूपे[4]त्वानुपपत्तेः । एतच्चित्ररूपेऽपि तुल्यमिति चेन्न । तत्र नील[5]स्यानीलचित्ररूपजनकताया अनुभवसिद्धत्वात् ॥

---

१ अचिरे दी° । २ ° णवत्वं° । ३ °म्बकस्य° । ४ °रूपानुप° । ५ नीलेनानील° ।

तद्विविधं योनिजमयोनिजं च । शेषे प्रमाणं नास्तीति चेन्न । पृथिवी अयोनिजशरीरारम्भिका आरम्भहेतुत्वात् जलवदिति तत्सिद्धेः । तदसिद्धमिति चेन्न । जलं शरीरजनकं इन्द्रियारम्भकत्वात् पृथिवीवदिति तत्सिद्धिः । अन्यथा इन्द्रियमपि नारभेत । अदृष्टरूपत्वात् । आप्यं शरीरं योनिजमिति चेन्न । भूमण्डले बुद्बुदोपमदेहानुपलब्धेः । करकादिवत्प्रतिबद्धद्रवत्वमिति चेन्न । भौमेनोष्मणा विलयनाभावात् । भूवर्तिनां शरीराणां गन्धवत्त्वेन पार्थिवत्वात् तदौपाधिकं किं न स्यादिति चेन्न । आनाशमनपगामित्वात् । सुवर्णगुरुत्ववत्स्यादिति चेन्न । तत्र बाधकसत्त्वात् । अन्यथा धर्मधर्मिव्यवहारोच्छेदापत्तेः[1] । शैत्यादिना देहशोषे निवृत्त्युपपत्तौ तदेव बाधकम्[2] । तथाहि । नेदं वायवीयं, रूपवत्वात् । न तैजसम्, दहनसंयोगे भस्मीभावात् । न आप्यं, कदाचिदनुपलभ्यमानस्वाभाविकद्रवत्वात् । ततोऽपामयोनिजशरीरारम्भकत्वम् । स्वर्गसुखं कस्यचिद्देहिनो भोग्यं सुखत्वात् । न चास्मदादिस्तथा भवितुमर्हति । भूमितलवर्तिनां सप्तद्वीपेश्वराणामपि तादृशसुखानामभावात् । न चायं नित्यो देहोऽमुक्तिप्राप्तेः, न चादृष्टोपग्रहनिवृत्तौ मानसो न्याय इति वाच्यम् । कल्पनागौरवात् । न च तद्योनिजं, गर्भवासादिदुःखवेदनादिभिः स्वर्गत्व[3]व्याघातात् । तन्न दुःखहेतुरिति चेन्न । अदृष्टकल्पनापत्तेः, शिवविष्णुमहेन्द्रादिभुवनसुखाभिलाषात् । पौराणिकविधिप्रवृत्तेश्च । न च मर्त्यातिशयितसुखप्रतिपादनपरं तदिति वाच्यम् । दुःखेऽपि तथा प्राप्तौ महापातकादावपि प्रवृत्तिप्राप्तेः, अर्थित्ववैचित्र्याद्विचित्रवित्तव्ययानुष्ठानापत्तेश्च । अन्यथा वेदाचाराणामपि विप्लवप्रसङ्गात् । तथापि भुजगमृगादिदेहातिरेकीति चेन्न । इन्द्रियाश्रयत्वेन तस्यापि देहत्वात् । देहव्यवहारस्य च मनुष्य एवोल्बणत्वात् । तत्सादृश्यस्य च तत्राभावात् । करकादौ जलव्यवहारवत्तत्रापि न लौकिकेतरसाधारणो देहव्यवहार इति सुस्थं **शरीरम्** ।

ननु मृत्पाषाणमणिर्व[4]ज्रसरित्समुद्रकरकादीनि द्रव्यान्तराणि भवन्तु विल-

१ °च्छेदप्रसङ्गात् ।° । २ °त्यादीनां देहशोषेऽपि वृत्त्युपलब्धौ त° । ३ स्वर्गिल° ४ °मणिसरि° ।

क्षणबुद्धिवेद्यत्वाज्जलवत् । अन्यथा तदप्येकजातीयं स्यादिति चेन्न । भुजगमृगादिषु शरीरबोधवदुपपत्तेः । न च जलादिप्रतिबन्दिग्रहः, स्नेहसमवायिकारणत्वेनभिन्नजातीयत्वात् । वज्रेऽलोहलेख्यत्वं बाधकम् । करकादौ अस्वाभाविकमद्रववत्वम् । शीतमयूखमयूखादौ च शैत्यमिति चेन्न । द्रव्यं हि द्विविधं स्पर्शाधिकरणमन्यच्च । आद्येऽप्युष्णाधिकरणमन्यथा च । अन्यथापि शीताधिकरणमन्यादृशं च तत्त्वेऽनुष्णाशीताधिकरणमेव । अन्यादृशस्पर्शानुपलब्धेः । तत्र द्वितीये अनित्यताव्याघातः । प्रथमे तेजस्त्वं द्वितीये जलत्वं चरमे क्षितिपवनयोरन्यतरत्वमिति नवबहिर्भावाभावात् । वज्रं तु पार्थिवमपि न लोहलेख्यं शक्तिभेदात् अबिन्धनतेजोवदित्यादिविस्तरस्तूह्यो बहुलत्वात् न लिखितः । **इति विषयः ।**

**भाष्ये** संहारविधिरुक्तः स नास्ति प्रमाणाभावादित्येके । तथाहि । विश्वसंतानोऽयं दृश्यसंतानशून्यैः समवायिभिरारब्धः संतानत्वादारणेयसंतानवदित्यत्र विश्वशब्देन ब्रह्माण्डपक्षीकरणे चतुर्महाभूतसंतानवासस्यासिद्धावाश्रयासिद्धिः । कार्यसंतानमात्रपक्षीकरणे क्रमारब्धदहनपवनारब्धसंतानन्यायात् आरम्भेऽपि प्रलयासिद्धेः सिद्धसाधनात् । एकदैवेति विशेषणे तेनैव व्यभिचारात् । एकदारम्भहेतुसाकल्ये सतीति विशेषणे विशेषणासिद्धेः । एकदापीति पक्षे विरोधात् । सर्वकार्याणां युगपदनुत्पत्तेश्च । एतेन ब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयान्तराः परमाणुत्वात् दीपारम्भकपरमाणुवदित्यादि प्रतिक्षिप्तम् । बालतरुणवृद्धदेहसंतानवदारम्भस्वीकारात् । न च तत्स्थापकादृष्टनाशादेव तन्नाश इति वाच्यम् । तस्यापि प्रवाहित्वेनैकफलोपभोगेऽपि देहान्तरारम्भकादृष्टवन्नाशानुपपत्तेः । न च ह्रासदर्शनात्तदनुमानं, दिनरात्रिह्रासैरेव व्यभिचारात् । चतुर्युगपरिवर्तस्तु स्यादृत्वयनवत् । न च संतानाः कदाचित्सहोच्छिद्यन्ते संतानत्वात् संप्रतिपन्नसंतानवदिति वाच्यम् । क्रमोच्छिन्नानां संतानानां कदाचिदपि तदभावेन व्यभिचारात्, विपरीतनिश्चयाच्च । ब्रह्मवर्षशतमिति गणितभेदगम्यः कालो महाभूतसंहतिमान् कालत्वात् । इदानीमिव तत्समयवर्तिनश्च वर्णाः सजातिसंतति-

जन्मानो वर्णत्वात् अधुनातनवर्णवत् । न चारणिमणिप्रभवज्वलनन्यायः । असतिबाधके निश्चितहेतुफलभावस्य विशेषनिष्ठत्वविरोधात् । अन्यथेन्धनधूमादावपि तथात्वापत्तेः । मैवम् । समग्रा एवाणवः कदाचित्समग्रोपादेयप्रबन्धशून्या आरम्भकत्वात् नष्टपवनारम्भकपरमाणुवत् । न च किंचिदेतादृशं न भविष्यतीत्यनैकान्तता । पवनादेर्दहनादावसंभवेनानुपाधित्वात् । भूगोलकसंतानश्च कदाचित्साकल्येनोच्छिद्यते संतानत्वात् दीपसंतानवत् । संतानत्वं दहनादावसंभवेनानुपाधित्वात् (?) । नन्वङ्गाङ्गिप्रवाहत्वं एकावयवित्वमस्यासिद्धम्, नानावयवित्वे तु क्रमनाशे सिद्धसाधनम्, यौगपद्ये तु व्यभिचार इति चेन्न । एवं सति तरुगिरिदहनपवनादिष्वपि संयोगादेकस्थूलबोधोपपत्तौ सर्वत्रावयविनोऽसिद्धिप्राप्तेः । तदसिद्धावपि चैकसमुदायप्रत्ययगोचरत्वेन सावित्रतेजोवदुच्छेदसाधनात् । उच्छेदस्तु क्रमेण यौगपद्येन वा मास्तु । किंतु साकल्येन साध्यः । न चासाकल्ये[2] सति स्थितौ संपद्यते । अनुपभुक्तसमस्तप्राणिकर्माणि युगपन्निरुद्धवृत्तीनि अनुपभुक्तविचित्रकर्मत्वात् सुषुप्तिसमयवृत्तिकर्मवत् । न चैवं भूतोच्छेदानुपलब्धेर्नैवम् । उत्पत्तेरनुपलम्भादनुत्पत्तिप्राप्तेः स्वभावत्वादेवावयवित्वप्रसङ्गात् । घटादेरपि वा तथाभूतस्य नित्यतापत्तेः । न च ब्रह्मवर्षशतनियमः । प्रलयस्य पुराण[3]प्रसिद्धेः । समयप्राचुर्येऽपि लक्षणपरत्वात् । तथा च कालविशेषस्य प्रत्यक्षादेव सिद्धौ आश्रयासिद्धिः । आगमात्तत्सिद्धौ तु तेनैव बाधात् । कश्चित्काल इत्युपादाने सिद्धसाधनात् । सर्वपदोपादाने च विशेषणवैयर्थ्यम् । तत्संग्राह्यप्रलयसमयाप्रतीतेः । प्रतीतौ तु बाधात् । एतद्बाधकबलादेव च वर्णव्यवस्थौ[4] आवरणेयसंततिवदिति **प्रलयः ।**

ईश्वरो न द्रव्यान्तरं, प्रमाणाभावादसिद्धेरित्येके । तन्न । विवादाध्यासितं सकर्तृकं कार्यत्वात् घटवदित्यनुमानस्य सत्वात् । सकर्तृकत्वं चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वमिति न सिद्धसाधनम् । कर्तुः शरीरनियतत्वेनाध्यक्षबाधा[5]दिति चेन्न । बाह्याध्यक्षाणां ज्ञानादावयोग्यत्वात् । मनसः स्वात्मैकगु-

---

१ °षनियतत्व° । २ चासावेकदेशावस्थि° । ३ °राणाप्र° । ४ °स्थापि धारणे° । ५ °बाध इति ।

णग्रहणयोग्यतानियमात् । दृश्यानुपलब्धेरसिद्धेः । शरीरस्य तद्व्यापकस्यानुपलब्धेः, कर्तुरभावनिश्चय इतिचेन्न । व्यापकानुपलम्भस्यानुमानतया बाधमुपक्रम्य सत्प्रतिपक्षतामापादयतो भुक्तवान्तिप्रसङ्गात् । शरीरिकर्तृसाधनादभिमतविशेषविरुद्धो हेतुरिति चेन्न । कार्यत्वस्यानुपलब्धव्यभिचारसाहचर्यबलेन वा विपरीतविशेषसाधकत्वं, तथाभूतविशेषप्रतिबन्धबलेन वा । नाद्यः । उत्कर्षसमत्वात् । द्वितीये तु स्वसिद्धाविनाभावबलेन वा परसिद्धाविनाभावबलेन वा । नाद्यः । अपसिद्धान्तात् । नेतरः । परस्यासिद्धेः । परं प्रति साधितेन नियमेनेति चेन्न । प्रमाणेन तत्साधनेऽपसिद्धान्तत्वात्[1] । अप्रमाणेन साधनानुपपत्तेः । साध्यव्यापकत्वेन साधनाद्विरोध इति चेन्न । अनपेक्षितविशेषस्य शरीरित्वनियमे तादृशसाध्ये पक्षधर्मताविरोधात् । तदविरोधस्य चानुमानाङ्गत्वात् । अन्यथा परस्य मतेऽप्यसर्वज्ञकर्तृकसिद्धेर्दुर्वारत्वात् । नापि व्याप्तिपक्षधर्मतयोरनीश्वरेश्वरकर्तृगोचरयोर्विरोधाद्विशेषविरोधः । सामान्यव्याप्तेर्विशेषविषयतया पक्षधर्मतया अविरोधात् । विशेषव्याप्तेश्चानुमानानङ्गत्वात् । नाप्यर्थाक्षिप्तविशेषविरोधात्साध्यबाधो विशेषविरोधः ।

केन पुनः साध्ये शरीरादिमत्कर्तृत्वमाक्षिप्तम् । सकर्तृकत्वेनेतिचेत् । अप्रतीतेन प्रतीतेन वा । नाद्यः । अप्रतीतस्यानाक्षेपकत्वात् । प्रतीतेस्तु साधनस्य निर्दोषत्वमन्तरेणानुपपत्तेः । पराभ्युपगमसिद्धेन तदाक्षिप्तमिति चेन्न । तस्य व्यापकानुपलम्भरूपत्वेन[2] सत्प्रतिपक्षनिक्षेपात् । ननु च दृश्येन कर्त्रा व्याप्तिर्गृह्यते दृश्यादृश्यसाधारणेन वा । नाद्यः, विटपादीनां व्यभिचारात् । नेतरः, तथाभूतस्य व्यतिरेकग्रहे प्रत्यक्षस्यासामर्थ्यात् । सामर्थ्ये वा विटपादिना व्यभिचारात् । किंच साधारणेनापि रूपेण व्याप्तिं गृह्णदध्यक्षं देशकालव्यवधानादृश्यमेव विषयीकरोति न स्वरूपादृश्यं, स्वरूपादृश्ये प्रत्यक्षस्यासामर्थ्यात्, सामर्थ्ये तु धूमस्यापि जठरीयसाधारणकृशानुजातीयमात्रेण व्याप्तिः स्यात् । उच्यते । कार्यत्वसकर्तृकत्वयोरनुपाधिनान्वयेन प्रतिबन्धावधारणात्, कार्यकारणभावयोरिव कार्यमात्रस्य कारणमात्रेण प्रतिबन्धावधारणेऽपि परोदी-

१ °द्धान्तात्° । २ °म्भस्वभावत्वे° ।

रितदूषणकलापः संभवत्येव । कार्यस्याहेतुकत्वे कादाचित्कत्वं न स्यादिति विपक्षे बाधकात्तत्र प्रतिबन्धग्रहो न त्वन्वयव्यतिरेकाभ्यामिति चेन्न । अहेतुकत्वस्याकादाचित्कत्वेन प्रतिबन्धासिद्धेः।व्यभिचारानुपलम्भेन तत्सिद्धिरितिचेत् ।

सर्वादृष्टेश्च संदेहात्स्वादृष्टेर्व्यभिचारतः ।
योग्यादृष्टे[1]रसत्वाच्च प्रतिबन्धो न सिद्ध्यति ॥

विपर्यये बाधकात्प्रतिबन्ध[2]ः स्यादिति चेन्न । अहेतुकस्य कादाचित्कत्वे बाधकाभावात् । शशविषाणमहेतुकं कादाचित्कं स्यादिति विपक्षे बाधकमिति चेन्न। सद्विशेषस्याहेतुकस्य कादाचित्कत्वं भविष्यतीति शङ्काया अनिवारणात् । यथा च सहेतुकत्वाविशेषेऽपि कस्यचित्प्रतीतिरूपत्वमप्रतीतिरूपत्वं च कस्यचित्तथाऽहेतुकत्वेऽपि कस्यचित्कादाचित्कत्वमकादाचित्कत्वं च कस्यचिद्भविष्यतीति । तथा च क्षित्यादिकं सकलहेतुरहितमेवास्तु । नचा[3]नौपाधिकत्वमसिद्धम्, न तावद्व्यक्तिभेदा उपाधयः । सामान्यव्याप्त्युच्छेदप्रसङ्गात् । न चावान्तरजातिभेदा [4]घटादयः । तेषां परस्परव्यभिचारत्वात् व्यक्तिभेदवत् । नाप्यतीन्द्रियो विशेषः । कार्यविशेषात्कारणविशेषानुमानोच्छेदप्रसङ्गात् । धूमेनापि दहनानुमाने तथाभूतोपाधिशङ्काया अनिवारणात् । न च शरीरिकार्यत्वमुपाधिः । उभयोरनुपलभ्यमानव्यभिचारयोः समानयोगक्षेमत्वेनोपाध्युपाधिमद्भावासिद्धेः । न च मैत्रातनयत्वश्यामत्वसाहचर्येऽप्येष न्यायः । तत्रोपाधिसाधकस्यापरस्यावश्यं व्यञ्जनीयत्वात् ।धूमे तु न जठर्यसाधारणदहनानुमानं, तेजोमात्रस्य धूमोत्पत्तौ व्यभिचारात् । दाहकस्पर्शाधिष्ठानस्यैव तेजसो धूमजनकत्वनियमात् ।

कर्मनिर्मितवैचित्र्यं यदि विश्वमनीश्वरम् ।
अस्त्वनिर्मितवैचित्र्यं जगदेतदहेतुकम् ॥

कर्तृव्यापकशरीरानुपलम्भेन सत्प्रतिपक्षत्वमस्त्विति चेन्न । ईश्वरमधिकृत्याश्रयासिद्धेः । क्षित्यादिकमधिकृत्य सिद्धसाधनात् । शरीरकर्तृकत्वव्यापकानु

१ °रसद्भावात्प्रति° । २ °बन्धनिश्चय इ° । ३ °चानुपाधिल° । ४ घटत्वादय उपाधयः । प° ।

पलम्भेन सकर्तृकत्वं निवर्तत इति चेन्न । सकर्तृकत्वं शरीरकर्तृत्वं शरीरिकर्तृकत्वावच्छेदेन प्रतीतं न वा । न चेद्व्याप्यव्यापकयोरप्रतीतौ व्याप्तेरसिद्धिः । प्रतीतं चेदशरीरिकर्तृकत्वसिद्धौ व्यभिचारः । प्रतीतं शरीरविशेषणानवच्छिन्नत्वेन व्याप्यं, शरीरविशेषणावच्छिन्नत्वेन च प्रतीतं व्यापकमिति चेन्न । विरोधात् । यदि हि विशेषणावच्छिन्नं तत्प्रथते कुतः केवलस्यावभासः । केवलं चेत्प्रथते कुतस्तदेव विशिष्टावभासः । सकर्तृकत्वस्य च शरीरेण व्याप्तिर्गृह्यते शरीरविशिष्टेन वा । नाद्यः । असंभवात् । नहि सकर्तृकं शरीरकर्तृत्वमिति व्याप्तिप्रतीतिः । विशिष्टेनापि किं सकर्तृकत्वेन अन्येन वा । नान्येन तदनुपन्यासात् । नापि सकर्तृकत्वेन । न हि यावद्व्याप्यत्वेन विवेचितं तावदेव विशेषणान्तरावच्छेदेन व्यापकमिति शक्यते वक्तुम् । व्याप्तिग्राहकस्य प्रमाणस्य सर्वत्र व्याप्यरूपं व्यापककोटावेवान्तर्भावयत एव व्याप्तिग्राहकत्वानियमदर्शनात् । तर्कापरिशुद्धिस्तु किं तर्कादपरिशुद्धिर्व्याप्तिपक्षधर्मताविरोधतर्करूपमेव वा, अपरिशुद्धिरनुमानदूषणं वा । नाद्यः । तत्र विरोधस्य साधितत्वात् । न द्वितीयः । अनुमानरूपसाकल्ये तस्यानुमित्युत्पत्तिप्रतिबन्धकत्वानिश्चयेन दूषणत्वानिश्चयात् । अन्यतरसिद्धदूषणभावस्य चैकतराभिमतसाधनवत्स्वसाध्यासाधकत्वात् शशशृङ्गवदग्रहो[1] बाधक इति चेन्न । अन्वयव्यतिरेकिणो व्यतिरेकिणो वा विषाणसाधकत्वोपन्यासे यथैव विपक्षे साध्यव्यतिरेकावधारणं तथैव पक्षेऽपीति हेतोर्बाधितविषयत्वात् । केवलान्वयिनस्तु स्वयं साधकत्वस्वीकारेऽपसिद्धान्तात् । परसिद्धेन परस्य विरोधोद्भावनं तु नास्ति । परमते विषाणजातीयस्य दृश्यतानियमात् । **इतीश्वरसिद्धिः ।**

अणुर्नाम द्रव्यान्तरमिति चेन्न । तदसिद्धेरिति केचित् । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तमिति चेन्न । तदसिद्धावणुपरिमाणस्यैवासिद्धेः । महत्त्वापकर्ष इत्थं व्यपदिश्य इति चेन्न । तस्य त्रुटावेव विश्रामात् । अणुव्यवहारास्पदमात्रं अनुपात्ताणुमहदादिवैचित्र्यं धर्म[2] इति चेन्न । प्रमाणसिद्धस्य व्यवहारास्पदत्वेन महत्त्वभेदादन्यस्य व्यवहारास्पदताप्रतिक्षेपात् । त्रसरेणुर्भागवान्

१ °शृङ्गप्रतिबन्दीग्रहो° । २ धर्मी इति ।

चाक्षुषद्रव्यत्वात् । अन्यथा तन्न स्यात् । महत्त्वप्रकर्षस्य चाक्षुषतानुविधानात् । दूरे केशाद्यनुपलम्भेऽपि शालतालतमालोपलम्भात् । तथा चानेकद्रव्यवत्त्वमपि महत्त्वकारणत्वाद्धूम इवेन्धनमनुविधत्ते चाक्षुषत्वमिति तत्सिद्धेरिति चेत् । महत्त्वनित्यत्वेनाप्युपपत्तेः । त्रसरेणुः कार्यं महत्वे सति क्रियावत्त्वादिति चेन्न । महत्त्वविशेषणव्यावृत्त्या प्रतीतावसामर्थ्यात् । तस्यान्यतः प्रतीतौ वैयर्थ्यात् । अतः प्रतीतावन्योन्याश्रयात् । नित्यश्च त्रसरेणुर्महत्त्वोत्कर्षापकर्षाभ्यां शून्यत्वात् गगनवत् । महत्त्वाधिकरणमनित्यमुत्कृष्टापकृष्टमहत्वप्रतिबद्धम् । घटो हि कुतश्चिदल्पतरः कुतश्चिन्महत्तरो भवति नत्वेवं गगनं, कुतोऽप्यल्पताया असंभवात् । त्रसरेणोर्महत्वं तु महत्वान्तरेभ्योऽपकृष्टं न कुतोऽप्युत्कृष्टम् । नहि त्रसरेणोरल्पं महदस्तीति, दृश्यसमवायिहेतुना च दृश्यत्वनियमात्, दृश्यानुपलब्धिप्रतिक्षिप्तत्वात् । अन्यथा दृश्याद्दृश्य[1]नियमव्यवस्थाविलयात् । तदिदमसंगतम् । यथा तैजसानां कारणानां न दृश्यतानियमस्तथेहापि । अन्यथा नयनविलयात् । न च त्रसरेणुमहत्वं नित्यं, महत्वे सति चाक्षुषत्वात् घटमहत्ववत् । न च नित्यस्त्रसरेणुर्महत्त्वापकर्षविरहमात्रस्य महत्त्वैकाधिकरणस्य नियमग्राहकमा[2]नगोचरत्वात् । अनुमानादेव परमाणुसिद्धेः । तथापि कथं तत्पृथिव्यादिजातीयं, कार्यसमवायिनिदानयोस्तन्तुपटादौ वैजात्यस्यापि दर्शनात् । गन्धादिमत्त्वात्तदनुमानमिति चेन्न । तस्य दृश्यसंस्थानव्यङ्ग्यत्वनियमात् । अन्यथा स्फटिकलोहादिजातेरप्यनुमानापत्तेः । ततः परममहद्गगनवदणवोऽपि द्रव्यान्तरमेव । अन्यथा तत्रापि का प्रत्याशेति स्थितम् । मैवम् । तदसिद्धेः । यदि हि दृश्यैकव्यङ्ग्यं स्यात् स्यादेवम् । नत्वेवम् । केवलस्य दृश्यत्वस्य भूजलादिसाधारण्येन व्यभिचारित्वात् । गन्धादिना तु विशेषणे वैयर्थ्यात् । गन्धसमवायिकारणतानिर्वाहक[3]जातेः परमाणावपि स्वीकारात् । अन्यथा गन्धसमवायिकारणत्वानुपपत्तेः । गन्धस्नेहभास्वररूपापाकजस्पर्शेन क्षितित्वादिजात्यनुमानात्, स्फटिकादिजातेश्च गुणविशेषस्य व्यवस्थापकस्याभावात्, दृश्यसंस्थानव्यङ्ग्यत्वेनाणुषु तदनुमानविरोधात् । इति **परमाणुः ।**

---

१ °दृश्यलनि° । २ °मात्रे गो° । ३ °जातेरणाव° ।

शब्दो गुणो, जातिमत्वे सति अस्मदादिबाह्याचाक्षुषप्रत्यक्षत्वात् गन्धवत् यदि तु निरवयवद्रव्यं स्यात् बाह्येन्द्रियग्राह्यं न स्यात्। निरवयवद्रव्यस्य बाह्येन्द्रियाग्राह्यत्वेन प्रतिबन्धात्। प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्। अयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः। वायुरेव यावद्वेगं चलनशब्दनिमित्ततयाऽभ्युपगतोऽस्त्वाश्रयः। अणुष्वतीन्द्रियो ध्वनिरस्तु, स्थूलेष्वैन्द्रियकः कारणगुणपूर्वकः। सचोत्पत्तौ भेरीदण्डादिसापेक्षो[1] यावद्द्रव्यभावी च आश्रय एवोपलभ्यते चेति किमसंगतमिति चेन्न। शब्दस्य विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वेन रूपादिवदवायवीयत्वात्। न दिक्कालमनोगुणः प्रत्यक्षत्वात् रूपवत्। नात्मनो बाह्येन्द्रियवेद्यत्वात्। तदाकाशमितरेभ्यो भिद्यते शब्दसमवायित्वात्। न यदेवं न तदेवं यथा घटः। इति आकाशः।

ननु कालसत्वे किं प्रमाणं, अध्यक्षमनुमानं वा। नाद्यः। अरूपत्वेनानध्यक्षत्वात्, प्रतिभासाभावाच्च। न द्वितीयः। लिङ्गाभावात्। परापरादिषट्कं लिङ्गमिति चेत्। न। परापरत्वे समवायितया वा लिङ्गं तदसमवायितया तन्निमित्ततया वा। नाद्यः। "दिक्कालयोः पञ्चगुणवत्वमि" ति भाष्यविरोधात्। नेतरः। संयोगस्यैव तादृशत्वात्। संनिकृष्टादिबुद्धेरेव तन्निमित्तत्वात्। न तृतीयोऽपि। संन्निकर्षाभावे संनिकृष्टबुद्धेरसत्त्वेन तत्सिद्ध्यर्थमवश्यं कालः स्वीकर्तव्य इति चेन्न। जगन्निमित्तभूतपरमेश्वरशक्तेरेव तदुपपत्तेः। एवं यौगपद्यादिप्रत्यया अपि न निरुपाधिसमयावलम्बनाः। वैलक्षण्यानुपपत्तिप्रसंगात्। सोपाधिसमयावलम्बनत्वेन तत्संबन्धसिद्ध्यर्थं समयाभ्यर्थनं, तच्चाम्बरादिद्वारेणैवोपपन्नमिति समयप्रतिबन्धस्यासिद्धेः। न च परत्वापरत्वसिद्धिरपि। बहुतरतपनपरिस्पन्दान्तरितजन्मत्वेनैव तदुपपत्तेः। अन्यथा मध्यत्वस्यापि स्वीकारप्रसङ्गादिति भूषणः। न च तपनपरिस्पन्दानां[2] साक्षादवच्छेदकतानुपपत्तौ तन्निर्वाहककालकल्पनेति वाच्यम्। कालप्रतीतौ तद्द्वारा विशिष्टप्रत्ययात्। विशिष्टप्रत्यये च कालानुमानादितरेतराश्रयादिति। अत्रोच्यते। दृश्यते तावद्दिवसमासादिवै-

---

१ °दण्डाद्यभिघातसा°। २ °स्पन्दभेदानां साक्षात्तदव°।

चित्र्येण तपनपरिस्पन्दभेदानां तत्तत्पदार्थसार्थे विशिष्टबुद्धिजनकत्वम् । ते च विशिष्टबुद्धिजनने स्वप्रत्यासत्तिमपेक्षन्ते । स्वरसतोऽप्रत्यासन्नत्वे सति विशिष्टव्यवहारजनकत्वात्, चन्दने सौरभवत् । स्वरसप्रत्यासत्तिरहिताश्रयसंबन्धे बाधकाभावात् । परस्परासंबन्धिनश्च साक्षात्संबन्धविरहे सति संबन्धित्वात् पटसंसृष्टनीलत्ववत् । न चेतरेतराश्रयः । सति संबन्धेऽवच्छेद्यावच्छेदकदृश्यंतयैव[1] विशिष्टव्यवहारदर्शनात् । समवायातीन्द्रियत्वे शीतलं जलमितिवत् । पिण्डतपनपरिस्पन्दयोश्च संयुक्तसंयोगिसमवायात्मनि परम्परासंबन्धेन तावत्पृथिव्यादिकं हेतुः । तपनपिण्डाभ्यामसंसर्गात् । न[2] च भास्करकरनिकरस्तथा । तदभावेऽपि गृहनिखातपदार्थेषु मासाद्यवच्छेदात् । न चाकाशात्मानौ तथा, विशेषगुणवत्वात्, पृथिवीवत् । न चात्राव्यापकत्वमुपाधिः । तुल्ययोगक्षेमयोरुपाद्युपाधिमद्भावानुपपत्तेः । यदि च गगनमात्मा चान्यधर्मेणान्यमवच्छिद्यात् काश्मीरवर्तिना कुङ्कुमरागेण कार्णाटचक्रवर्तिकरकमलमवच्छिद्यात्[3] । न च कालेऽप्येष प्रसंगः । तस्यासिद्धावाश्रयासिद्धेः । सिद्धौ वा नियतपरधर्मोपसंक्रामकत्वेनैव सिद्धेः । एकस्यैवोपाध्युपनयनसामर्थ्ये च व्यापकान्तराणामन्यथासिद्धसन्निधीनामुपाधिभेदोपनयनाहेतुत्वेऽव्यापकत्वस्य साध्याव्यापकत्वेनानुपाधित्वात् । व्यापकानामपि तद्धेतुत्वाभावात् । दिगेवास्त्विति चेन्न तस्या एवासिद्धेः । सिद्धौ वा तदहेतुत्वेनैव सिद्धेः । ततस्तपनस्पन्दभेदपिण्डसंसर्गोपनायकः पदार्थ इतरेभ्यो भिद्यते उपाधिभेदसंसर्गोपनायकत्वात् । न यदेवं न तदेवं यथा पृथिवी । एष तावच्चिरंतनः पन्थाः । **इति कालः ।**

ननु दिशोऽरूपत्वेनानध्यक्षत्वाल्लिङ्गाभावाच्च कथं सिद्धिः । पूर्वापरादिदश प्रत्ययाः सन्ति लिङ्गं, तत्कथं लिङ्गाभाव इति चेन्न । तेषां निरुपाधिदिगवलम्बनत्वे दिशां दशत्वप्रसंगे नवैवेति व्याघातात् । सर्वत्र सर्वप्रत्ययप्रसंगाच्च उपाधिमुखपिण्डीकारे तु तेनैव प्रत्ययानामन्यथासिद्धत्वात् । उपहितदिगवलम्बनत्वेन च लिङ्गान्तरस्यासत्वे प्रत्ययानामनुत्पादात् । उपाधीनां सूर्यादिगतत्वेन स्वरूपप्रत्यासत्तिशून्यत्वेनावच्छेदकान्तरस्वीकारे तत्सिद्धिरिति चेन्न कालेनैव तदुपपत्तेः । अत्रोच्यते । कालस्य क्रियामात्रोपनायकत्वान्न संयोगो-

---

१ °श्यतामात्रेण वि° । २ न चाहस्कर° । ३ °र्तिकरतलम° ।

पनायकत्वम् । नानापुरुषसाधारणप्रत्ययविषयवर्तमानाद्युपाध्युपनायकत्वं च व्यापकं, नत्वसाधारणप्राच्याद्युपाध्युपनायकत्वम् । असाधारणो ह्ययमुपाधिः । प्राच्या एव पुरुषान्तरं प्रति प्रतीचीत्वात् । दिशस्तु सिद्धौ नियततपनसंयोगोपसर्पकत्वेनैव प्रसंगस्य बाधात् । अन्यथासिद्धेस्तत्सिद्धिः । दिगितरेभ्यो भिद्यते पूर्वापरादिप्रत्ययविषयसंयोगोपनायकत्वात्, न यदेवं न तदेवं, यथा पृथिवी । एवं सति पूर्वाद्युपाध्युपनायकत्वेनैव दिशो नियमादनेकदिक्कल्पनापत्तिः, तद्वदनेककालकल्पनापत्तिश्चेति चेत् । न । अनेकत्त्वेऽपि क्रियोपाध्युपनायकः कालः । संयोगाध्युपनायिका च दिगिति न नवैवेति व्याघातः ।

आत्मनामानन्त्येऽपि आत्मत्वेनोपसंग्रहवदविरोधात् । परममहत्परिमाणसामान्यं वा विशेषगुणशून्यद्रव्याधिकरणानेकव्यक्तिवृत्ति, परिमाणतारतम्यविश्रान्तिविषयजातित्वात् अणुत्ववत् । न चानन्त्यकल्पनम् । उक्तोत्तरत्वात् । परममहत्परिमाणं द्रव्यचतुष्टयवृत्ति नित्यपरिमाणत्वादिति तु बाधितम् । परिमाणस्य प्रत्येकं मेलकेन वा द्रव्यचतुष्टयावृत्तित्वात् । न च मनसा सिद्धसाधनम् । तस्याणुत्वात् । न च कालकृतपरत्ववैलक्षण्यादस्य दिक्कृतत्वम् । कालजन्यत्वेन तद्वैलक्षण्यसिद्धेः । स्वरूपवैलक्षण्यस्य च कालकृतेनापरत्वेन व्यभिचारात् । विलक्षणदेशकालव्यवहारबलेन दिक्कालभेदकल्पनेति तु न वाच्यम् । व्यवहारविषयभेदे प्रत्ययं विना विचित्रव्यवहारस्यैवानुपपत्तेः । अज्ञाते व्यवहाराभावात् । व्यवहारविषयभेदपरिज्ञानं च न प्रत्यक्षात् । तयोरतीन्द्रियत्वात् । नानुमानात् । तेषां दूषितत्वात् । न व्यवहारादितरेतराश्रयात् । तत्परिज्ञाने हि तद्व्यवहर्तव्यता तद्व्यवहारे च तत्परिज्ञानमिति । अत्रोच्यते । विवादाध्यासितानि कर्माणि निरवयवेन्द्रियग्राह्यविशेषगुणवज्जातीयवर्जितसाधारणद्रव्याधिकरणजन्यानि कार्यत्वात् अभिन्नतन्तुहेतुकद्रव्यगुणकर्मवत् । न च शब्दसुखादिभिर्व्यभिचारः । एवंभूताधारजन्यत्वेन तेषामपि पक्षत्वात् । विशेषगुणाधारजन्यत्वेन न तद्रहिताधारजन्यतेति चेन्न । घटादावसर्वज्ञकर्तृपूर्वकत्वेन सर्वज्ञकर्तृपूर्वकतावदविरोधात् । अतएवात्रात्मनि ज्ञानम्, इह नीले नीलत्वम्, इह कर्मणि चलनत्वम्, इह तमसि खद्योत इत्यभिन्नाकारसाधा-

रत्वमवभासते । असंबद्धं कथमिदमवच्छेदकमिति चेन्न । समवायवत्स्वभाव-प्रत्यासत्तिबलेनोपपत्तेः ।

नन्वेवं सति प्रत्यक्षादिकं स्यात् । न स्यात्, अनुमानपारतन्त्र्येण तत्प्रवृत्तेः । व्यवसायपारतन्त्र्येण परमाण्वादिषु मनःप्रवृत्तिवत् घ्राणजसुरभिज्ञानपारतन्त्र्येण त्वगिन्द्रियस्य गन्धे प्रवृत्तिवत् । अप्रतिसंहितानुमानानामपि हेतुमतिदर्शनान्नैवमितिचेन्न । देहे ज्ञानसुखादिप्रतीतावभ्यस्तत्वेन प्रतिसंहितत्वेऽपि लिङ्गेऽप्रतिसंधानात् । एवं कालोऽपि सर्वत्राभिन्नाकारवर्तमानप्रत्ययवेद्यः । अस्तित्वं वर्तमानत्वमितिचेन्न । तद्धि वस्तूनां स्वरूपं वा सत्तासामान्यं वा । नाद्यः । भिन्नेष्वभिन्नावभासानुपपत्तेः । नेतरः । अभावे सामान्ये च वर्तमानप्रत्ययात् । अनुत्पन्नप्रध्वंसत्वमसत्प्रागभावत्वं च वर्तमानत्वमिति चेत् न । ध्वंसप्रागभावनिवृत्तेर्वस्तुस्वभावत्वेन व्यावृत्तत्वादनुगतावभासविषयताविरोधात् । अर्थक्रियाजननयोग्यत्वमिति चेत् न । तदपि वस्तुस्वरूपमेव । तच्च व्यावृत्तमनुवृत्तं वा । तत्राद्ये अभिन्नावभासविरोधोऽन्यत्र जातित्वापत्तिः । कार्योपहितं स्वरूपमिति चेत् । अननुसंहितकार्यान्वयव्यतिरेकस्यैव नीलादिष्वभिन्नावभासदर्शनात् ।

किंच जनकत्वं जननानुकूलसहकारित्वं वा तत्स्वरूपं वा । नाद्यः । सहकारिरहितेष्वपि वर्तमानप्रत्ययात् । नेतरः । अतीतानागतेष्वपि वर्तमानप्रत्ययप्रसंगात् । तेषां स्वरूपतोऽयोग्यत्वे तत्र कारणत्वनिश्चयस्य भ्रान्तत्वप्रसंगात् । प्रमाणवेद्यत्वमिति चेन्न । अतीतेष्वपि वर्तमानावभासापत्तेः । ततः समवायवदेकं वर्तमानं यदवच्छेदकं सः कालः । न चैवमतीतानागतावभासबलेनातीतानागतपदार्थवेदनप्रसंगः । प्राक्प्रध्वंसाभावोपाधिबलेनैव तदुपपत्तेः । विवादाध्यासितान्यव्यापकद्रव्याणि युगपद्विशेषगुणशून्यैकद्रव्यसंसर्गीणि द्रव्यत्वात् आत्मवत् । इति दिक् ।

सुखोपादानमितरेभ्यो भिद्यते सुखोपादानत्वात् । न यदेवं न तदेवं यथारूपम् न चात्र रूपादिविषयपञ्चकमेवोपादानम् । आन्तराणां बाह्यानुपादानत्वात् । अन्यथा ज्ञानस्यापि देहाद्युपादानतापत्तेः । नापि ज्ञानमेव । सुखस्याज्ञानात्मकत्वात् ।

अन्यथा शब्दस्यापि तादृशतापत्तेः । न चेदमेव ज्ञानं स्पष्टनीलाद्याकारस्येव स्पष्टज्ञाताकारस्यापि, बाह्योपादानत्वात् । नचानादिः सुखसंततिरुपादानम् । पूर्वमनुपलब्धेः । तदिन्द्रियविषयबुद्धिदेहाद्व्यतिरिच्यमानमुपादानमात्मैव । असति चात्मनि अन्यानुभूतस्यान्येन स्मृतिर्न[1] स्यात् । उपादानोपादेयभावादुपपत्स्यत इति चेन्न । दिनान्तरानुभूतस्य सुषुप्तिदशान्तरितोपादानोपादेयसंततित्वेन[2] स्मृतेरनुपपत्तेः । निराकारा चित्सन्ततिरनुवर्तत इति चेन्न । चितां साकारत्वेन प्रतिबन्धात् । अन्यथा सर्वत्र[3] ज्ञानसुखदुःखादिसंततेरेवानुवृत्तिप्राप्तेः । नन्विदं असंबद्धम् । जगतः क्षणभङ्गित्वात् । तथाहि । यत्पूर्वापरकालयोर्विरोधिसंसर्गि तत्पूर्वापरकालयोर्भिद्यते यथा प्रदीपः, तथा च विवादास्पदम् । न चैतदसिद्धम् । प्रसंगतद्विपर्ययाभ्यां तत्सिद्धेः । अजनकमपि सहकार्यभावात्समर्थमिति संदिग्धव्यतिरेकित्वमेतयोरिति चेन्न । स्वभावानिरुक्तेः । तथाहि भावस्य कारकस्वभावत्वे सदा जननम् । अन्यथाऽजननमेव स्यात् । सहकारिसन्निधाने जनकत्वं, अजनकत्वं चान्यदेति स्वभाव इति चेन्न । कारकमकारकं चेति यदि धर्माभिधानं न तर्हि धर्मिणः स्वभावः । धर्मिरूपं चेत् कथमनेकमेकस्य धर्मिणो रूपम् । एकं चेत् यावदवस्थानं जनकमजनकं चेति प्राप्तम् । यदि च सहकार्यवच्छेदोऽपि स्वभावान्तर्भूतस्तदा गलेपादुकया सहकारिणामुदयः । न चेत्सदाऽजननापत्तिः । सहकारिसमयानन्तरसमयिनः फलात्पूर्वभावित्वं स्वभाव इति चेन्न । अस्यापि धर्मस्वभावत्वात् । अत्रोच्यते । सहकारिसंन्निधिकाले यः कार्यं जनयति भावः स सहकारिविरहकालेऽपि तत्र कार्ये समर्थोऽसमर्थो वा । समर्थश्चेत्तदापि जनयेत् । न चेत्तदेव वस्तु तत्र शक्तमशक्तं चेति दुर्वारो विरोधः । सहकारिविरहकालेऽसत्त्वान्न करोति नतु समर्थमिति चेन्न । सहकारिविरहकाले याऽसद्रूपता सा सहकारिसंन्निधानकालेऽपि विद्यते न वा । विद्यते चेत्स्वकाल एवासत्वप्रसंगः । न चेन्न तर्हि सहकारिविरहकाले तदसद्रूपम् । अथैकमेव वस्तु सहकारिभावाभावयोः सदसद्व्यवहारयोग्यमिति चेत्तथैव तर्ह्येकमेव शक्ताशक्तव्यवहारयोग्यमिति तुल्यम् । किंच न ह्यसामर्थ्यं विहायान्यदसत्वमस्ति । अथैकस्मिन्नेव वस्तुनि

---

१ °न्येन स्मरणं न स्या° । २ °शायामन्तरि° । ३ °त्र सुख° ।

सहकारिसमवधानानन्तरं कार्यजननस्वभावता तद्विरहेचासमर्थस्वभावतेत्युभयमविरुद्धमिति चेत्तुल्यमिदमस्मन्मतेऽपि । तथापि सहकारिसमवधाने यत्समर्थं रूपं तदेव चेत्प्रागप्यस्ति पूर्वमपि कार्यप्रसवप्रसंग इतिचेन्न । सहकारिविरहे यत्तत्र न समर्थरूपं तदेव चेत्सहकारिसन्निधानकालेऽप्यतोऽजननप्रसंग इति तुल्यम् । न च सहकारिणां स्वभावान्तार्भावः । यस्मिन् सहकारिणि सति कार्यमुत्पद्यते तस्यैव शक्तपदवाच्यत्वात् ॥ **इति आत्मा ॥**

सुखप्रतीतिरिन्द्रियजा साक्षात्कारिप्रतीतित्वात् रूपप्रतीतिवत् । न च ज्ञाताद्याकारो ज्ञानात्मैवेति वाच्यम् । नीलादिबोधेऽपि तथाभावप्रसङ्गात् । कादाचित्कत्वान्नैवमिति चेत्तुल्यमत्रापि । वासनापरिपाककादाचित्कत्वं तत्र हेतुरिति चेत्तादृगेवैतदपीति । सामग्रीसाजात्यं तत्र हेतुरिति चेन्न । एकदेशसाजात्यस्य नीलादौ व्यभिचारात् । अन्यस्यासिद्धेः । नाप्ययं संदिग्धव्यभिचारः । इन्द्रियप्रतीतावप्रतीतौ च व्याघातात् । ततो यत्सुखोपलम्भकमिन्द्रियं तन्मनः ।

कथं पुनरितरभेदीदम् । मनस्त्वजातेरिति चेन्न । अनुगतप्रत्ययासिद्धौ शब्दाप्रवृत्तेः । सुखोपलम्भकत्वेनाप्युपपत्तौ इन्द्रियत्ववदसिद्धेः । अस्तु वा सापि घ्राणादिवत् क्षितेरवान्तरजातिः । नापि सुखोपलम्भकेन्द्रियत्वात्तदपार्थिवं, पार्थिवत्वेऽपि तदविरोधात् । न चास्पर्शवत्वात्ततो भिद्यत इति वाच्यम् । तस्याप्यसिद्धेः । अनारम्भकत्वात्तत्सिद्धिरिति चेन्न । विषयदेहयोः परमाण्वन्तरादप्युत्पत्ताविन्द्रियतया च फलाभावादन्यथासिद्धेः । पार्थिवाणोरपि कस्य चित्तादृशत्वापत्तेः । न चेदेवं घ्राणमपि पार्थिवं न स्यात् । ततः कल्पनालाघवादेव तदुचितम् । व्योमादेश्च भेदानुपपत्तेः मूर्तत्वादिति चेन्न । अस्पर्शवत्त्वेन तत्प्रतिक्षेपात् । ततो भेदकाभावान्न भिद्यत इति स्थितम् । मैवम् । विभुविशेषगुणग्राहकेन्द्रियत्वेन मनसो मूर्तचतुष्टयव्यावृत्तेः । पार्थिवस्य गन्धग्राहकत्वनियमात् । अन्यथा घ्राणरसनयोरेकशेषापत्तेः । श्रोत्रमपि द्रव्यान्तरं स्यादिति चेन्न । तत्र शब्दासमवायात् । शब्दसमवाये वा तस्याकाशत्वात् । मनसश्च ज्ञानासमवायिकारणसंयोगाश्रयत्वेन आत्मवत्स्पर्शानाधार-

१ °दप्युपपत्ता° ।

त्वात् । स्पर्शवत्संयोगस्य स्पर्शवद्द्रव्यारम्भादौ सामर्थ्यात् । अमूर्तादपि भिद्यते, मूर्तत्वात् । तदसिद्धम् । सुखदुःखयोरबाधितयुगपत्प्रत्ययविषयत्वेन यौगपद्यात् । अन्यथा यौगपद्यविलयापत्तेः । एकदानेकज्ञानानुत्पादस्य ज्ञानकारणत्वेनैव समूहालम्बनबोधवदुपपत्तेः । नानाविषयज्ञानस्याप्यत एवोत्पत्तेः । अन्यथा गुडादौ युगपद्रसस्पर्शावभासप्रसंगात् । सुखादिदेशनियामकत्वमपि सामग्रीदेश-नियमस्यैव । अन्यथाणुमात्रदेशतापत्तेः । द्विस्त्रिश्छिन्नभुजगादौ चलनदर्शना-च्चेति चेत् । नैवम् । सुष्वापव्यासंगयोः बहिरिन्द्रियमनःसंबन्धविच्छेदलक्षण-योर्विभुत्वे व्याकोपात् । दृष्टसाकल्येऽदृष्टवैगुण्यस्याप्यसंभवात् । अदृष्टाभावस्य दृष्टसाकल्यविरोधात् । अन्यथा सामग्र्याः फलानुमानस्य शक्तेश्चासिद्धिप्र-सङ्गात् । न च देशकालादयोऽप्युपाधयः । सर्वसहकारिविरहे मनसोऽप्य-सिद्धेः । आत्ममनोयोगस्य च संयोगत्वेनानित्यत्वात् । अन्यथा विभागस्यापि नित्यतापत्तावपसिद्धान्तात् । नित्यत्वे च संयोगस्यापि समवायत्वेन रूपादी-नामपि संयोगित्वात् । विभागित्वेपृथगुपलम्भप्रसङ्गः । अयुतसिद्ध्या विशेष इति चेन्न । अजसंयोगव्याघातात् । संयोगत्वेन विशेष इति चेन्न । तस्य नियामकं विना नियतव्यङ्ग्यत्वानुपपत्तेः । अत एव यौगपद्यप्रत्ययाभिमानः । गोधाभुजगादौतु वेगवत्खड्गाभिघातेन नानादेहावयवाश्रितवेगवत्प्राणपवनसं-योगादेव क्रियोत्पद्यते । अतिरिक्तत्वं च न सिद्ध्येत् । श्रोत्रवद्गगनेनैव कृतार्थ-त्वादिति । आत्मान्तरेण वेत्युपरम्यते । **इति मनः ॥**

## इति श्रीन्यायलीलावत्यां द्रव्यविचारः ।

संख्या तावन्नैकादिव्यवहारहेतुत्वेन भिद्यते । तस्य समुचितस्य स्वरूपा-सिद्धेः । विपरीतस्य भागासिद्धेः । गणनासाधारणकारणत्वादिति चेन्न । एक द्वित्र्यादिज्ञानविषयत्वे पूर्वदोषात् । संख्यामात्रत्वे तस्यैवासिद्धेः । संख्याजा-तीयं तदिति चेन्न । जातेरप्यसिद्धेः । गणितशब्दप्रयोगात्तत्सिद्धिरिति चेन्न । हस्ततुलादिपरिमितदीर्घादिपरिमाणगुरुत्वयोः परिमितव्यवहारवदुपपत्तेः । विपक्षाद्व्यावृत्तेश्च । एकत्वद्वित्वादीनां सामान्यरूपत्वेनैवोपपत्तेः । न च

१ °व्यावस्थादौ । २ स्वस्वाप° । ३ °रोधित्वात् । ४ °स्य अश° । ५ °न्नैकत्रैयत्वादि° । ६ °वहतिव° ।

परापरभावानुपपत्तिः । अन्यूनानतिरिक्तव्यक्तिकत्वात् । न च भेदे मानाभावः। विचित्रबुद्धिवेद्यत्वात् । न च सदा द्वित्वावगतिः । विशिष्टबुद्धिव्यङ्ग्यत्वात्, योनिसंबन्धबुद्धिव्राह्मणत्ववत् । न चैकजातीयकारणान्नानाजात्यभावः । कारणेष्वपि तज्जातिसत्वात् सत्तावत् । अन्यथा सदिति व्यवहारात्सत्वमपि गुणान्तरं स्यात् । गुणेष्वेकत्वबुद्धिवत् सत्प्रतीतिरपि भ्रान्त्यैव स्यात् । बाधकाभावस्त्वैकत्वादावपि तुल्य एव । मैवम् । द्वित्वादिकं न सामान्यं एकैकशः स्वोपरक्तव्यवहारजनकत्वात् । संयोगवत् । अन्यथा घट इतिवदेकत्रैवायं द्वावयं चतुराविति प्रतीतिः स्यात् । जातेः प्रत्येकं समाप्तत्वात् । एवं व्यवस्थिते गणनव्यवहारत्वादेकव्यवहारोऽपि गुणानुबन्धी द्वित्वादिव्यवहारवत् । सत्तावदग्रहस्तु मानाभावादेव निरस्तः । संख्यात्वजातिरपि गणितप्रयोगसाध्यैव । परिमाणगुरुत्वयोस्तु धर्माधर्मवदुभयवृत्तिजात्यभावात् । एकत्वं च न स्वरूपाभेदमात्रम् । एकमेकमित्यननुगमापत्तेः । यादृश्येकत्वं[1] संख्या समवैतीति चेन्न । जातेरपि विलयापत्तेः । सामग्रीभेद एव चासौ विशेषः स्यात् । न चायं तत्र प्रत्ययः । तदननुसंधानेऽपि जायमानत्वात् ।

ननु तथापि द्वित्वादिकं न सिद्ध्यति, एकत्वसमुच्चय एव तद्व्यवहारोपपत्तेरिति चेन्न । विचारासहत्वात् । अयं हि समुच्चयमात्रे वा व्यवहारः तद्विशेषे वा । नाद्यः । तस्या वैचित्र्ये द्वित्वादिव्यवहारवैचित्र्यविरोधात् । न द्वितीयो, विकल्पानुपपत्तेः । स हि समुच्चेतव्यस्य भेदाद्वा तदुपाधिभेदाद्वा । नाद्यः । एकतायाः सर्वत्र तुल्यत्वात् । न द्वितीयः । आरोपितस्य पारमार्थिकस्य वा द्वित्वादेरसंभवात् । सैकं सैकैकमित्युत्तरोत्तरमेकैकवृद्धावर्थविशेषः प्रतीयते । तत्र[2] द्वित्वादिव्यवहार इति चेन्न । एकत्ववीप्सा ह्येकैकत्वम् । सा चैकत्वनानात्वमात्रं सर्वसाधारणम् । आरोपितमनारोपितं वा द्वित्वादिकमनाश्रित्य विचित्रव्यवहारहेतुरित्यतोऽविशेषात् । तथाप्यपेक्षाबुद्धेरवैचित्र्ये कार्यविशेषानुपपत्तौ तुल्यव्यवहारानुपपत्तिरिति चेन्न । विषयावैचित्र्येऽपि स्वभाववैचित्र्यात् । विचित्रकार्यजनकत्वात् । धूमज्ञानस्य विषयाभेदेऽपि शक्तिवैचित्र्याद्धू-

१ यादृशैकसंख्या । २ °ते तच्च द्वि° ।

मविषयकसंस्कारदहनज्ञानजनकत्ववत् तन्निबन्धन एव द्वित्वादिव्यवहारोऽस्त्विति चेन्न । विचारासहत्वात्। सहि सत्तया व्यवहारभेदमुत्पादयेत् ज्ञातो वा नाद्यः । अतिप्रसङ्गात् । न द्वितीयः । तन्निरूपकस्य द्वित्वादेरसंभवात् । व्यवहारेण तन्निरूपितमिति चेन्न । तस्मिन्ननिरूपिते व्यवहारासिद्धेः । न ह्येतन्निरूपितविषयविशेषव्यवहारनिष्पत्तिर्नाम । द्वित्वादिकं कथमुत्पद्यत इति चेत् । सत्तयैवेति गृहाण । उभयाश्रितं च द्वित्वं स्वरूपतोऽभिन्नमवभासते । न चैषाऽभेदप्रतीतिर्भ्रान्ता अबाधितत्वात् । अन्यथा गोत्वव्यञ्जकपिण्डैरेव[1]ानुगताकारप्रतीत्युपपत्तौ जातेरपि विलयापत्तेः । शब्दसमयानुपपत्तिस्तूभयपक्षसाधारणी नैकत्र पक्षपातमालम्बते । तदिदं चिरन्तनवैशेषिकमतदूषणं भूषणकारस्यातित्रपाकरम् । तदियमनाम्नातता भासर्वज्ञस्य यदयमाचार्यमप्यवमन्यते । तथा च तदनुयायिनस्तात्पर्याचार्यस्य सिंहनादः "संविदेव हि भगवती"त्यादि । इति संख्या ।

परिमाणं मानव्यवहारकारणम् । ननु कः पुनरयं मानव्यवहारः । हस्तवितस्त्यादिव्यवहारो वा अणुमहदादिव्यवहारो वा असर्वगतव्यवहारो वा परिमितव्यवहारो वा । नाद्यौ । अननुगतत्वेनासामान्यलक्षणत्वात् । परमाणौ परममहति चाभावात् । न द्वितीयः । सर्वपरिमाणसाधारणत्वाभावात् । न तृतीयः । अविभुत्वेनैवोपपत्तेः । व्यापकपरिमाणे चाभावात्, न तुरीयः, महद्व्यवहारस्यैव परिमितव्यवहारत्वात् । सर्वपरिमाणाव्यावर्तकत्वात्[2] । अणुत्वेऽपि परिमितव्यवहारोऽस्तीति चेन्न । परिमाणत्वजातेरसिद्धावणुत्वस्यैवासिद्धेः । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम्, परिमाणतारतम्यत्वात्, महापरिमाणतारतम्यवत् इति तत्सिद्धिरिति चेत् । परिमाणतारतम्यं किमणुमहत्साधारणपरिमाणजातीयतारतम्यं महत्त्वतारतम्यं वा विवक्षितम् । नाद्यः, असिद्धेः । नेतरः, सिद्धसाधनात् । त्र्यणुकोपादानं[3] परिमाणवत्, द्रव्यत्वात् घटवदिति तत्सिद्धिरिति चेन्न । परिमाणजातीयतामात्रस्य व्यापकस्यासिद्धौ प्रतिबन्धस्यासिद्धेः । गुरुत्वावच्छेदादौ च परिमितव्यवहारदर्शनात् । ततो

१ °रेव गवाका° । २ ° व्यापकत्वात् । ३ °त् । अणुव° ।

भेदकः मानाभावान्न भिद्यते। अत्रोच्यते। त्र्यणुकोपादानं[1] गुणत्वापरजात्या महत्वैकज्जातीयगुणवत् द्रव्यत्वात् घटवत्।

ननु किं महत्वजात्या एकजातीयगुणवत्वं साध्यं जात्यन्तरेण वा। नाद्यः, अपसिद्धान्तात्। नेतरः, असिद्धेः। नानामहत्वसाधारणजातिमात्रेणेति ब्रूमः। न चैवं तत्र महत्वस्यैव सिद्धिः। परमाणोरपि दृश्यतापत्तेः। ततो महत्वाणुत्वसाधारणी जातिः परिमाणत्वं सिद्ध्यतीति। गुरुत्वावच्छेदादौ च परिमितव्यवहारो निरूपिततदवच्छेदकोपाधिसंख्याविषयः। ननु महत्वमेव न सिद्ध्यति बहुतरद्रव्यसमवायेन महदिति प्रत्ययोपपत्तेः। बहुतरद्रव्यसमवायाभावनिबन्धन एव द्व्यणुकादेरनुपलम्भोऽपि। एवं सति गगनेऽपि महदिति प्रत्ययो न स्यादिति चेत्। न। स्यादन्यत्र महत्त्वासिद्धौ तत्र महत्वाननुमानात्। मैवम्। अवयवबहुत्वमात्रं वा महदिति प्रत्ययगोचरबहुत्वविशेषोवा। सोऽपि निर्द्धारितोऽनिर्द्धारितो वा। नाद्यो, महदल्पसाधारणत्वात्। न द्वितीयः, अवयवबहुत्वेयत्तानिश्चयेऽपि घटादौ महदिति प्रत्ययात्। तन्निरूपकमानाभावाच्च। न तृतीयः। महत्वप्रकर्षापकर्षप्रतीत्यनुदयप्रसङ्गात्। प्रचुरदेशव्यापकत्वात्तदनुमानमिति चेत्। न। तद्देशप्राचुर्यस्यापि निश्चायकमानाभावात्। तत्रापि प्रचुरदेशान्तरव्यापकत्वानुमानेऽनवस्थानात्[2]। कथं तर्हि घटादेः प्रचुराप्रचुरदेशव्यापकत्वप्रतीतिः। महत्वोत्कर्षापकर्षाभ्यां तदनुमानादिति ब्रूमः। देशानां च भेदेनाप्रतिसंधाने तदपेक्षाबुद्धिसाध्यस्य बहुत्वविशेषस्यैवानुपपत्तेः। द्व्यणुकानुपलम्भो गुणविशेषविपर्ययाधीनः सालोकेन्द्रियसंनिकृष्टचाक्षुषद्रव्यानुपलम्भात्, पवनानुपलम्भवत्। दीर्घत्वं च उपर्यधोभावावच्छिन्नप्रचुरदेशव्यापकत्वम्। नचात्रापि प्रचुरदेशव्यापकत्वानुपलम्भो, महत्वोत्कर्षेणैव तदनुमानात्। न चेदेवं वक्रत्वऋजुत्वादिकमपि परिमाणान्तरं स्यात्। **इति परिमाणम्।**

अथ पृथक्त्वे किं प्रमाणम्। पृथगिति प्रत्यय इति चेत्। न। तस्यान्योन्याभावावलम्बनत्वात्। अन्यथा गुणादौ तदनुपपत्तेः। तथा सति इदमिदं न भवतीति प्रत्ययः स्यात् न तु पृथगिति चेन्न। सत्यादिपदवदन्तर्भावितन

1 °ते। अणु°। २ °शान्तराभिधानेऽवस्था°।

न्यर्थ एव भावात्मनि पृथक्शब्दसंकेतादुपपत्तेः। मैवम्। अभावस्य प्रतियोगिसापेक्षनिरूपणत्वात्। अस्य चावधिनिरूप्यत्वात्। आनुशासनिकपञ्चमीविभक्त्यन्तरवाचकपदाभिलप्यमानत्वमवधित्वमिति चेन्न। अनधीतशब्दविद्यानां तथाप्रतीतिविरोधात्। दण्डी पुरुष इति प्रतीतिवदुपपत्स्यत इति चेन्न। तत्र दण्डाधिकरणत्वस्य मत्वर्थीयेन प्रतिपाद्यमानत्वात्। तस्मात् पृथक्त्वगुणनिरूपकत्वमेवावधित्वम्। अन्यपर्यायशब्दसंबन्धे पञ्चम्यनुशासनव्यवहाराच्च **पाणिने**रन्यादिशब्दानां पृथक्त्वगुणयोगिपदार्थप्रतिपादकत्वमुन्नीयते। अन्यथा अघटः पट इत्यन्योन्याभाववाचकनञ्प्रयोगेऽपि पञ्चमीप्रसङ्गात्। पृथक्त्वं च रूपवत्सत्तासंबन्धितया प्रतिभासते। न च तमोवदेतत् स्यादिति वाच्यम्। तद्भावत्वे बाधकाभावात्। **इति पृथक्त्वम्।**

अथ द्विपृथक्त्वे किं प्रमाणम्। अनुभव एव इति चेत् न। तस्य द्वित्वसाहचर्यादेवोपपत्तेः। ततो नैतद्व्यवस्थेति केचित्। मैवम्। द्वित्वसामानाधिकरण्येन पृथक्प्रतीतेः। द्वित्वं च न घटत्ववत् अयं घटोऽयं घट इत्येकैकसंसर्गितया भासते। अयंच द्वावयं च द्वाविति प्रत्ययप्रसङ्गात्। न चैकपृथक्त्वमुभयाश्रितम्। एक पृथक्त्वयोरभेद आरोप्यत इति चेन्न। असति बाधके उभयाश्रितपृथक्त्वप्रतीतेर्भ्रान्तत्वानुपपत्तेः। न चेदेवं चित्रमप्येकं रूपं न स्यात्। नीलादीनां विजातीयानारम्भकत्वनियमे व्यापकैरव्यापकैर्वा नीलपीतादिनानारूपैरेव चित्ररूपप्रतीतेरुपपत्तेः। चित्रैकरूपानुभवबलात् तद्व्यवस्थितिरिति चेत्तुल्यं प्रकृतेऽपि। द्विपरत्वबंदीत्ववशिष्यते। सा तु परत्वापरत्वप्रक्रियायां निरसनीयेति। **इति द्विपृथक्त्वम्।**

संयोगसिद्धौ किं प्रमाणम्। संयुक्त इति प्रत्यय इति चेत्। न। तस्य विभागाभावावलम्बनत्वात्[1]। कः पुनरयं विभागः, किं संबन्धाभावमात्रं उताभावभेदः भावभेदो वा। नाद्यः। समवायादेरपि संयोगतापत्तेः। इष्टत्वात्। न द्वितीयः। अभावाभावत्वेन भावत्वव्यवस्थितेः। नेतरः। गुणगुणिनोर्विषयविषयिणोरपि संयोगितापत्तेः। विभागध्वंसः संयोग इति चेन्न। संयुज्य विभक्तेऽपि तत्प्रत्ययप्रसङ्गात्। तमःप्रत्ययवद्यावदुत्पन्नप्रतियोगिध्वं-

१ °भावात्मकत्वात्।

सावलम्बनत्वात् संयोगप्रतीतेरसिद्ध एव संयोग इति चेन्न । सहोत्पन्नयोरविभक्तयोरेव संयोगात् । जातस्तत्रापि विभाग इति चेन्न । तद्धेतूनां कर्मविभागादीनामभावात् । अजोऽसाविति चेन्न । ध्वंसानुपपत्तेः । ततः संयोगप्रागभाव एवासौ तदभावस्तु संयोग इति स्थितम् । संयोगः सन् इत्यबाधितबुद्धिवेद्यत्वाच्च । संबन्धबुद्धिवेद्यत्वात् समवायवत् । अन्यथाऽसमवायाख्यभावाभाव एव समवायोऽपि स्यात् । गगनपवनसंसर्गजध्वानस्य च द्वितीयशब्दवत् भावासमवायि कारणत्वानुमानात् । तथोत्पादकस्तु[1] न संयोगः क्षणभङ्गनिषेधादतिरिक्तेऽपि[2] सर्वत्र ध्वानोत्पत्तिप्राप्तिरिति चेन्न । अव्याप्यवृत्तित्वात् ।

किं पुनरव्याप्यवृत्तित्वम् । एकस्यैकदा भावाभावौ, विचारासहत्वादिदमयुक्तम् । तथा हि । न तावत्तत्र संयोगस्य प्रागभावप्रध्वंसाभावौ । तयोः प्रतिपक्षसमानकालत्वाभावात् । नात्यन्ताभावः । तेन सादेश्यव्याघातात् । नान्योन्याभावः । व्याप्यवृत्तीनामपि स्वाश्रये तादात्म्याभावबलेनाव्याप्यवृत्तिताप्रसङ्गात् । यथा एकत्रैव बीजे कारणत्वं तदत्यन्ताभावश्च कार्यभेदावच्छेदात् तथात्राप्यवच्छेदभेदमादायाविरोध इति चेन्न । अवच्छेदो हि यद्यनर्थान्तरं अर्थान्तरं वा व्यापकं तदा तदवच्छिन्न एव विधिनिषेधाविति स एव विरोधः । अर्थान्तरमव्यापकं चेदयमपरोऽवच्छेदभावाभावस्वभावो विरोधः । अत्रोच्यते । वस्तुस्वभाववैचित्र्यात्संयोगस्य स्वाभावसमानदेशकालत्वात् । रक्तारक्तस्वभावः पटः यथा विज्ञानमेकरक्तारक्तरूपम् । विज्ञानस्य भेदानुभवो ज्ञानान्तरेण वा तेनैव वा । नाद्यो, भेदे ग्राह्यलक्षणायोगात् । अभेदे तु रक्तारक्तात्मनि स्वसंवेदनेन भेदानुभवस्यापनयनादभिन्नं ज्ञानमिति चेन्न । अभेदेऽपि रक्तस्वभावमरक्तस्वभावं वानुभूयेत न तु रक्तारक्तस्वभावमिति प्रकाशमानस्य भेदस्यापह्नवायोगात् । भेदाभेदाभ्यामशक्यविवेचनमाकारचक्रमिति[3] चेन्न । बाह्यमप्येवमेव । बाह्यस्य भेदेऽप्येकत्वप्रतीतिरविद्यावशादिति चेत्तुल्यम् । ज्ञानेऽपि ज्ञानानां भिन्नत्वेऽन्येनान्यस्यावेदनात् कथं रक्तारक्तप्रतीतिरिति चेन्न । अभेदेऽपि हि कथं रक्तारक्तप्रतीतिरिति तुल्यम् । अभिन्ने भेदावसायोऽविद्यावशादिति चेन्न । आत्मनो भेदस्याविद्यावशादप्यनु-

---

१ °योत्पादस्तु । २ °तिरेकेऽपि । ३ °भ्यां शक्य° ।

ल्लेखात् । उल्लेखेऽपि वाऽनात्मनोऽपि पारमार्थिकतापत्तेः । अभिन्नमेवानुभूतमरक्तव्यावृत्त्या रक्तं रक्तव्यावृत्त्या च अरक्तमित्युच्यत इति चेन्न । रक्तव्यावृत्तस्यारक्तव्यावृत्ततानुपपत्तेः । अनुभवबलादेवमिति चेत्तुल्यं संयोगस्यासंयोगित्वेऽपीति । अभेदबुद्धेरनन्यथासिद्धत्वात् अविरोधात् ।

ननु संयोगस्यैकत्र सदसत्वे रक्तारक्तस्वभावेनैव पटोऽवस्थीयेत नतु कदाचिद्रक्तत्वेनैवेति चेत् । न । रक्तावयवावच्छेदोपाधितिरस्कृतरक्तारक्तस्वभावत्वात् । तत्र संयोगस्याव्याप्यवृत्तित्वादुपाधीनामपि रक्तारक्तस्वभावतेति रक्तारक्तत्वव्याहतेः । किंचाभावस्य स्वप्रतियोगिसमानदेशकालत्वे स्वभावविरोधादन्योन्याभावत्वप्रसङ्गः । मैवम् । संयोगस्य स्वाभावेन सह सादेश्यविरोधः । साधकमानाभावात् । भावान्तराणां स्वाभाववैदेश्यनियमात् । संयोगेऽपि तथाऽवधार्येत इति चेत् । सोऽयं भावजातीयस्य स्वाभाववैदेश्यनियमो व्यभिचारानुपलम्भमात्रेण वा सिद्ध्यति विपर्यये बाधकप्रमाणप्रवृत्तेर्वा । नाद्यः । तस्यनियमानियमसाधारण्यात् । नापरः । तदभावात् । भावाभावयोः समानदेशकालत्वे भावाभावव्यवहारगोचरत्वं न स्यादिति चेत् । न । नहि वैदेश्यभिन्नकालतानिमित्तो भावाभावव्यवहारः । किंतु भावाभावाकारव्यवहारयोग्यस्वरूपनिमित्तो घटतदन्योन्याभावयोरनित्यतो विशेषात् । तस्माद्भावान्तराणां स्वभावसमानदेशकालत्वविरोधेऽपिसंयोगादीनां स्वभाववैचित्र्यात्समानदेशकालस्वाभावाविरुद्धत्वमव्याप्यवृत्तित्वमाख्यायते । नच वस्त्वन्तरासाधारणमिदं रूपं संयोगादीनामसंभावनीयम् । सर्ववस्तूनामसाधारणरूपोच्छेदप्रसङ्गात् । न चैवं रक्तेऽप्यवयवे रक्तारक्तप्रतीतिः । तदद्दश्यभागवृत्तित्वेन संयोगाभावस्याप्रतीतेः । न चैवं स्वप्रतियोगिना सह समानदेशकालत्वे संयोगाभावस्यान्योन्याभावत्वापत्तिः । नेयमिदं, नेदमिहेति विलक्षणबोधवेद्यत्वात् विद्यमानस्यैव वा संयोगस्योपलम्भानुपलम्भावव्याप्यवृत्तित्वम् । ननु किं देशभेदेनोपलम्भानुपलम्भौ कालभेदेन पुरुषभेदेन वा । नाद्यः । अभिन्नदेशत्वात् । नापरौ । रूपादीनामव्याप्यवृत्तित्वापत्तेः । देशकालपुरुषभेदेन पुनरेकस्य वस्तुन उपलम्भा-

---

१ °नो भेदस्य पा° ।

नुपलम्भौ विरोधादेवानुपपन्नौ । मैवम् । एकदा तावदुपलम्भानुपलम्भौ भिन्नेष्वे-वावयवेषु न त्ववयविनि । अत एव विरोधात्कालभेदेन तु संयोगानुपलम्भः तन्निरूपकस्य महारजनादेः संयोगिनोऽनिरूपणात् । कुतः पुनः पटनिरूपणेऽपि महारजनाद्यनिरूपणम् । पटस्य भूरिदेशव्यापकत्वेनानावृतत्वेनेन्द्रियसंनिकर्षेऽपि महारजनादेरिन्द्रियासंनिकर्षात् । कुतस्तर्हि पटो रक्त इति प्रतीतिरिति चेत् । न कुतश्चित् । न हि यत्र संयोगः प्रतीयते तत्रैव तदैव तदभावः प्रत्येतुं शक्यते । पटो रक्त इति व्यपदेशस्तर्हि कथम् । अवयववर्तिना रागाभावेन परम्परासंबन्धेन तद्व्यपदेशात् । न चावयवसंयोगेनैव संयुक्तप्रत्ययोपपत्तौ संयोगोऽप्यवयविनि नास्तीति वाच्यम् । सर्वत्रावयविनि संयोगोच्छेदे युक्तप्रत्ययस्यैवोच्छेदप्रसङ्गात् । करणसंयोगस्य कार्यसंयोगोपार्जननियमाच्च । तस्मादवयविवर्तिना संयोगाभावेनावयविनि संयोगस्य सादेश्यव्यपदेशविषयत्वमेवाव्याप्यवृत्तित्वम् ।

नन्वेवं देशान्तरोच्चरितस्यापि शब्दस्येहस्थेन ग्रहणं स्यात् । न । एतच्छ्रोत्रे तस्याप्राप्तेः । कर्णशष्कुलीतत्संयोगयोरेकतरस्य श्रोत्रत्वे अत्रोच्चारितस्यापि शब्दस्याग्रहणम् । ताभ्यामसंबन्धात् । नभसस्तु श्रोत्रत्वे तस्यापि ग्रहणम् श्रोत्रप्राप्तेरविशेषादिति चेत् । न । एतद्देशवासिपुरुषं प्रति विशिष्टादृष्टप्रसूतकर्णशष्कुलीभेदस्य तत्संयोगिभेदस्य वा शब्दविशेषोपलम्भ एव सहकारित्वाभ्युपगमात् । सैव तर्हि कर्णशष्कुली अत्र स्थितपुरुषस्य तच्छब्दोपलम्भे सहकारिभूतास्त्विति चेत् । न । तस्या एतत्पुरुषादृष्टानुपगृहीतत्वादिति मूकीभव इति संयोगः ।

विभागः संयोगप्रध्वंसोऽस्त्विति चेत् । न । संयोगवदुक्तोत्तरत्वात् पल्लवः प्रक्रियायामित्यलम् । **इति विभागः ।**

कथं पुनः परत्वापरत्वे । संयोगाल्पीयस्त्वभूयस्त्वयोरेव तद्व्यवहारहेतुत्वात् । अनुमेयात्प्रचुरतरातीततपनपरिस्पन्दावच्छेदादेर्विलक्षणे एव प्रत्यक्षप्रतिभासिनी परत्वापरत्वे । तथाचान्यत्राप्यनुमानमिति चेन्न । चिरक्षिप्रादेर

१ °दा भावतदु° ।

बहिर्भावापत्तेः । ततः परापरधीरप्यनध्यक्षैवाभ्यासपाटवाद्वायुर्वातीति प्रत्ययवदवभासते ।

ननु भिन्नदिगवस्थितयोर्योजनतदर्थान्तरितत्वेन दूरादूरबुद्धावपि परापरव्यवहाराभावेनातिरिक्तनिमित्तत्वमस्तु । परापरादिव्यवहारोऽस्तीति चेन्न । मध्यव्यवहारस्यापि प्रसंगात् । उभयापेक्षसंयुक्तसंयोगाल्पीयस्त्वभूयस्त्वज्ञानजन्यमुभयापेक्षमपरत्वमेव मध्यता । भवति हि इदमनयोरन्तरालमित्यत्रैकावध्यपेक्षयाऽवध्यन्तरे संयुक्तसंयोगभूयस्त्वबुद्धिः । अन्यत्र संयुक्तसंयोगाल्पीयस्त्वमतिः । मैवम् । आर्जवावस्थितेरप्युपयोगात् । भवति हि चतुर्योजनान्तरिता मत्तो वाराणसी, द्वियोजनान्तरितं च सुन्नपुरमित्यनुसंधाय वाराणसीपरापरं च सुन्नपुरमिति व्यवहारः । स यदि संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वावच्छेदकज्ञाननिबन्धनस्तदा प्रमातर्यपि परापरव्यवहारप्रसंगः । ततोऽतिरिक्तपरत्वापरत्वनिबन्धनः परत्वापरत्वयोरुत्पादनियमः कुत इति चेत् । जनकशक्तिवैचित्र्यात् । यथा भेर्याकाशसंयोगस्योभया[1]श्रितत्वेऽपि नभसि शब्दजनन[2]नियम इति **किरणावलीकारः** । तन्न । यत्संयुक्तसंयोगबहुत्वावच्छिन्नसंयोगाधिकरणत्वेन प्रतिसंधीयते तत्र परव्यवहारो न तु प्रमातरि तस्यावधित्वेन प्रतीते । यदा तु प्रमातैव तदधिकरणत्वेन प्र[3]तीयते तदा भवत्येव प्रमातरि परव्यवहारो वाराणासीतः परोऽहमिति । संयोगस्वभावत्वे परत्वस्य संयोगिनिरूप्यत्वं स्यात्, न त्ववधिनिरूप्यत्वमिति चेन्न । संयुक्तसंयोगयल्पीयस्त्वभूयस्त्वयोः परापरव्यवहारविषयत्वेनैव तदुपपत्तेः । अत्रोच्यते । किं पुनः संयोगस्य भूयस्त्वमल्पत्वं च, परिमाणविशेषः संख्याभेदावच्छेदो वा । द्वयमपि न । गुणानां गुणसंसर्गायोगात् । आरोपिता संख्येतिचेत् । न । द्वित्वत्रित्वादेर्व्यभिचारात् । क्वचिद्द्वित्वं क्वचित्त्रित्वादिकमिति चेत् । न । अनुवृत्तपरव्यवहारविरहापत्तेः, एकत्र चतुष्के त्रित्वपञ्चत्वाद्यपेक्षया परापरव्यवहारानुपपत्तेश्च । चतुष्के त्रित्वपञ्चत्वाद्यपेक्षया बहुत्वमल्पत्वं च तद्व्यवहारनिमित्तमिति चेत् । न । चतुष्के बहुत्वाल्पत्वयोरभावात् । परसंख्यावच्छिन्नत्वं भूयस्त्वमिति चेत् न । संख्यायाः स्वाभाविकपरत्वाभावात् । आरोपितत्वेऽपि क्वचिद्वास्तवपरत्वस्वीकारात् । संख्यायाः प्राथम्यमपरत्वं पश्चाद्भावश्च परत्वमिति चेत् । न ।

१ °याश्रयत्वे° । २ °जननशक्तिरिति कि° । ३ °तिसंधीयते° ।

परत्वापरत्वेतरस्य प्रथमपश्चाद्भावस्यैवासिद्धेः। पराचीनापराचीनापेक्षाबुद्धि जन्यत्वं तदिति चेत्। न। परत्वापरत्वे विहाय परार्वाग्भावयोरभावात्। येन विषयेणापेक्षाबुद्धेर्वैचित्र्यं स इति चेत्। न। अपेक्षाबुद्धेर्विषयवैचित्र्यमन्तरे णापि विचित्रकार्यजननशीलत्वेन विलक्षणफलजनकत्वाविरोधात्। अत एव तर्हि विचित्रव्यवहारजनकत्वमस्त्विति चेत्। न। विषयविशेषविमर्शम न्तरेण विलक्षणव्यवहारोपहारविरोधात्। बुद्धेः स्वरूपवैचित्र्यस्य परापरव्य वहारास्पदस्य परत्वापरत्वैककार्योन्नेयत्वात्। कुतस्तर्हि संयुक्तसंयोगाल्पत्व बहुत्वप्रतिभासनमिति चेत्। न। परत्वापरत्वोत्पत्तेः पूर्वं न कुतश्चित्तदसत्वा त्। न च संयुक्तसंयोगस्वरूपं कश्चिद्गणयति। प्रत्येकं सामान्यतस्तदनुमान मिति चेत्। नहि अविद्यमानमनुमातुं शक्यम्। न च लिङ्गमस्ति। दूरत्वादूरत्वं लिङ्गमिति चेत्। न। दूरत्वादूरत्वयोः परत्वापरत्वातिरिक्तयोरभावात् ततः परत्वापरत्वसामानाधिकरण्यमेव संयुक्तसंयोगस्य भूयस्त्वमल्पत्वं चोत्प परत्वापरत्वेऽवभासते। यत्तु भासर्वज्ञीयं मतं "पूर्व्वोत्पन्नत्वं पर पश्चादुत्पन्नत्वमपरत्वमि"ति तत्कणभक्षपक्षाक्षमामात्रविजृम्भितम्। पूर्वपश्चा द्भावस्य परत्वापरत्वातिरिक्तस्य निर्वक्तुमशक्यत्वात्। यथाचैतत्तथास्माभिरपी श्वरसिद्धावुक्तम्। इतिपरत्वापरत्वे।

प्रकाशो बुद्धिः। सा च द्विविधा। विद्या[1] चाविद्या च। तत्राविद्या संश यविपर्ययैस्वप्नानध्यवसायलक्षणा। तत्र न तावत्संशयस्योभयविधिर्विषयः पुरुषः स्थाणुश्चेति समुच्चयप्रसंगे विकल्पानुपपत्तेः। नाप्युभयनिषेधः। स्थाणु र्न पुरुषो नेति प्रतीतिप्रसंगात्। नाप्यन्यतरनिषेधः। स्थाणुरित्येवावधारण संगात्। नाप्युभयविधिनिषेधौ। उभयावधारणप्रसंगात्। निषेधस्यानुपलम्भ मात्राद्वा निश्चयः योग्यतासहिताद्वा। नाद्यः। अतीन्द्रियनिषेधावभासापत्तेः न द्वितीयः। तत्वस्फुरणे अतत्वारोपानुपपत्तेः। स्थाणुत्वोपलम्भे तदनुपलम्भा भावात्। शुक्तिकायां रजतावभास इवाभावावभासानुपपत्तेः। तत्र दोषवश दभावानुपलम्भस्यात्रापि तुल्यत्वात्। दूरत्वादेरप्यत्र सत्वात्। वार्थश्च न द्व विधिः। न द्वयनिषेधः। अन्यतरनिषेधो वा। कीर्तितदोषात्। नापि चरम

१ °धा। अवि°। २ र्ययानध्यवसायस्वप्नलक्ष°।

नित्योऽनित्यो वेत्यत्राधिकाभावासत्वे तदनुपपत्तेः । नापि विरोधः । तन्निश्चये वा शब्दसंभेदानुपपत्तेः । एककोटिस्वीकारपक्षे च तदनुपपत्तेः । अन्य एवायमाकारे भेदः स्ववासनापातो वा शब्दसंभेदी । अस्थाण्वादिव्यावृत्तिकृतश्च स्थाण्वादिपदप्रयोगः । चित्राकारे नीलादिशब्दसंभेदवदिति समानधर्मादिजत्वं लक्षणमसिद्धमिति केचित् । तन्न । उभयविधे[1]रुभयनिषेधवैशिष्ट्यस्य विषयत्वात् । दूरत्वात्तु विशेषाग्रहे स्मृतिस्थयोर्भावाभावयोरारोपात् । ऊर्ध्वत्वस्यैवोभयराशिसाधारण्येनोभयराशिस्मारकत्वात् । दोषमाहात्म्यादनुपलम्भाभावेऽपि संनिकर्षाभावे रजतारोपवत् कोटिचतुष्टयारोपोपपत्तेः । एकत्र धर्मिणि स्फुरितयोराकारभेदयोर्विरोधस्यैव विकल्पविषयत्वात् । तस्यैव वा शब्दाभिलापादिति सर्वं सुस्थम् । परस्परविरुद्धार्थावमर्शः संशय इति लक्षणम् । इति संशयः ।

विपर्ययोऽप्यतस्मिंस्तदिति प्रत्ययः । यथा शुक्तिकायां रजतमिति ज्ञानम् । ननु चात्र पुरोवर्त्तिज्ञानं दोषवशोपजाततदंशमोषं रजतत्वसामान्यस्मरणं, रजतत्वस्येव पुरोवर्तिनि समवायतदभावयोरज्ञानं प्रवृत्तिव्यपदेशादिरूपव्यवहारे कारणम् । सत्यरजतेऽपि तथैव प्रवृत्तिदर्शनात् । तत्रापि रजतव्यक्तिज्ञानं रजतत्वबोधश्चान्तरालिकव्यक्त्यन्तरापरिस्फुरणं समवायाज्ञानं च तत्प्रतिपादकलिङ्गाभावात् । अविसंवादिव्यवहारजनकत्वविशिष्टसाकाङ्क्षरूपरूपिसहोपलम्भो हि तल्लिङ्गम् । विसंवादिव्यवहारजनकयोः पीतत्वशङ्खयोः समवायाभावात् । तदविसंवादित्वं तु प्रवृत्त्युत्तरकालगम्यम् । प्रवृत्तेः पूर्वमप्रतीतमसिद्धं आभासभूतं देशकालानवच्छिन्नरजतत्वं समवायिस्मरणदर्पणारूढमनुभूतपुरोवर्तिना वस्तुना गृहीतभेदं वा प्रवृत्तिकारणं, भेदज्ञानमसमवायज्ञानं च निवर्तकमिति व्यवस्थिते प्रयुज्यते । विवादाध्यासिताः सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात् घटप्रत्ययवदिति गुरुमततत्ववेदिनः । अत्रोच्यते । व्यवहारो हि व्यवहर्तव्योपलम्भनिबन्[2]धनो न तु व्यवहरणीयविपर्ययानुपलम्भनिबन्धनः । न हि घटव्यवहारस्तन्मतिमतिक्रम्य कलशविपर्ययानुपलम्भेन भवति । यदि तु स्यात् स्यात् संसर्गानुपलम्भबलेनासंसर्गव्यवहारोऽपि दुर्वारः । तस्माद्यो

---

१ °धे नुभ° । २ °नो युज्यते ननु ।

व्यवहारः स व्यवहर्तव्यप्रकाशनिबन्धनो यथा कलशव्यवहारः। व्यवहारश्चायं विमतिगोचर इति। अपि च बाष्पपूरगोचरधूमव्यवहारोपचाराद्भवति शिखरिशिखरगोचरविचित्रचित्रभानुव्यवहृतिः। सा किं संसर्गविज्ञप्तिपूर्विका असंसर्गाग्रहपूर्विका वा। नाद्यः। अन्यथाख्यातिस्वीकारचमत्कारात्। न द्वितीया। अनुमानमात्रोच्छेदप्रसंगात्। एवं शब्देऽपि वाच्यम्। असंसर्गाग्रहस्य बाधिताबाधितव्यवहारकारणत्वे व्यवहारवैचित्र्यं संवादित्वासंवादित्वरूपं न स्यादिति संवादिव्यवहार[1]: संसर्गविज्ञप्तिपूर्वक इति चेत्। न संसृष्टयोरसंसर्गाग्रहस्य संवादिव्यवहारहेतुत्वात्। शाब्देऽपि चानाप्तप्रणीतवाक्यप्रभवसंस्मृतिसंतानासंसर्गाग्रहस्याविसंवादिसंसर्गव्यवहारहेतुत्वात्। संसर्गग्रहस्य वा विसंवादिव्यवहारहेतुत्वे संसर्गाग्रहादविसंवादिव्यवहारे व्यवहारवैचित्र्यस्यान्यथासिद्धेः। रजतत्वतद्व्यञ्जकयोः संसर्गाग्रहेऽपि संवादिव्यवहारदर्शनेनानैकान्तिकत्वाच्च। यो यद्विलक्षण आभासः स तद्विजातीयप्रमाणप्रतिरूपकः यथा प्रत्यक्षाभासः शब्दा[2]द्याभासात्। विलक्षणौ च शब्दलिङ्गाभासौ प्रत्यक्षाभासादिति शब्दानुमानसिद्धिरिति चेत्। न। विचारासहत्वात्। तत्सादृश्यं वा तदाभासत्वं विपर्यस्तव्यवहारजनकत्वं वा तद्विपर्ययत्वं वा। नाद्यः। अनैकान्तात्। भवति हि प्रत्यक्षाभासाद्विलक्षणस्तर्कदृष्टान्तस्मरणं दूषणाभासो न तु प्रत्यक्षेतरप्रमाणप्रतियोगिकः। अत एव न द्वितीयः। दृष्टान्ताभासादेरपि विपर्यस्तव्यवहारजनकस्या[3]प्रमाणप्रतियोगिकत्वाभावात्। यो यद्विलक्षणः प्रमाणाभास इति विशेषणादयमदोष इति चेत्। न शब्दलिङ्गयोः[4] प्रमाणत्वमन्तरेण शब्दलिङ्गाभासयोः प्रमाणाभासत्वासिद्धेः। शब्दाभासो हि पदार्थस्मृतिसंतानासंसर्गाग्रहरूपत्वात् स्मरणाभासः स्यात्। शब्दप्रामाण्यसिद्धौ च तदाभासस्याप्यन्यथाख्यातिस्वभावत्वसिद्धेः। न तृतीयः। अन्यथाख्यातिस्वीकारात्। यश्चाभासो नासौ संसर्गवेदनप्रतियोगिकः यथेदं रजतमित्याभासः। आभासश्च शब्दादिः। यः संसर्गव्यवहारः सोऽसंसर्गाप्रतिभासपूर्वकः यथा रजतव्यवहाराभेदः। तथा विवादाश्रय इति निषेधाच्च। शब्दानुमानार्थापत्तिप्रामाण्याक्षेपकप्रत्यनुमानो

१ °हारोऽसं°। २ शब्दाभा°। ३ °कस्य प्रमा°। ४ °योः प्रामाण्यसिद्धिमन्त°।

न्यासानवकाशाच्च । यथादीपैकत्वव्यवहारो भेदाग्रहात् तथा प्रत्यभिज्ञानमात्रमुच्छिद्येत । तत्तुल्ययुक्तिकत्वात् । यत्राभेदोऽस्ति तत्रावभासते न सर्वत्रेति चेत् । न । यत्राभेदोऽस्ति तत्र व्यवह्रियते न सर्वत्रेति तुल्यम् । अविद्यमानेऽप्यभेदे तदभावाग्रहाद्व्यवह्रियत इति चेत्तुल्यम् । असन्नप्यभेदो भेदाग्रहादवभासते ।

ननु चैवमन्यथाख्यातिरनुपपन्ना, कारणाभावात् । दोषाः कारणमिति चेत् । न । दोषाणां यथार्थज्ञानजननप्रतिबन्धे सामर्थ्यात् । विपरीतज्ञाने त्वसामर्थ्यात् । न खलु[1] भृष्टं कुटजबीजं न्यग्रोधधानायै कल्पते । दावदहनदग्धवेत्रबीजस्य कदलीकाण्डजनकत्ववद् भस्मकदुष्टजठरानलस्य बहुतरान्नपाकहेतुत्ववच्च दोषाणां विपर्ययहेतुतेति चेत् । न । दग्धस्यावेत्रबीजत्वात् । अन्यस्यैव विजातीयफलहेतुत्वात् । प्रभूतदाह्यदहनशक्तेरनलेषु स्वाभाविक्या अन्नरसजननशक्त्या अभिभवेन भस्मकेन रसहेतुशक्तिप्रतिबन्धात्प्रभूतदाह्यदहनशक्तेरनभिभवात् । तदेतदपेशलम् । यथा दाहस्य वेत्रबीजनाशकत्वं रूपान्तरजनकत्वं च तथा दोषाणामप्ययथार्थज्ञानजनकत्वमन्यविज्ञानप्रतिबन्धकत्वं च स्यात् । दहनस्य प्रचुरा दाहशक्तिः किं स्वरूपमुतातीन्द्रियमथ सहकारिभेदः । तत्र न तावदाद्यः । तथा सति रसार्जनदाहसामर्थ्ययोरभेदेनाभिभाव्याभिभावकत्वाभावात् । न द्वितीयः । असिद्धेः । न तृतीयः । भस्मकाभावस्य रसजननसहकारित्वेन तदभावस्य प्रचुरदाहजनकत्वमिति दोषकारणतापत्तेः । यथा वाऽविसंवादिव्यवहारोपहारशीलानां विज्ञानानां दोषवशात् तदजननेऽपि विसंवादिव्यवहारप्रसवक्षमत्वं तथा एतदपि स्यात् । अयथार्थत्वे ज्ञानस्य ज्ञानमात्रेऽनाश्वासप्रसंगः स्यादिति चेत् । न । विसंवादिव्यवहारजनकत्वेऽपि तुल्यत्वात् । यत्र विशेषदर्शनं संशयहेतुदोषानुपलम्भो वा न तत्र व्यवहारविसंवादशङ्केति चेत् । तुल्यमयथार्थविषयत्वेऽपि । स्वाभाविकं ज्ञानस्य संवादिव्यवहारजनकत्वं आपवादिकमन्यथात्वमिति चेत् । न । शाब्देऽपि तथापत्तिरिति लौकिकवाक्यानामप्रामाण्यं न स्यात् । ननु च कारणत्वं वा विषयत्वं, तद्गोचरव्यवहारजनकत्वं वा तत्प्रतिबद्धव्यवहारजनकत्वं वा ।

---

१ °लु दुष्टं ।

नाद्यः । अतीतादेरविषयतापत्तेः । न द्वितीयः । रजतप्राप्तिवद्रजताभावप्रा-प्तिव्यवहारस्यापि जननाद्रजताभावविषयताप्रसंगात् । तृतीये तु पुरोवर्तिरज-ततादात्म्यविषयत्वमसंभावितमेव । तन्नियतव्यवहारजननाभावादिति चेत् न । यत्र यस्येच्छाप्रयत्नजनकत्वं येन वा निरूपणं तस्य तद्विषयत्वात् । कारणमेव साक्षात्कारिणो ज्ञानस्य गोचरो नाकारणरजतमिति चेत् । न । प्रत्यभिज्ञायाः पूर्वकालताया अपि गोचरत्वात् । यदसत्तन्न प्रकाशते यथा व्योमकमलं । असच्चपुरोवर्त्तिरजततादात्म्यमिति चेत् । न । गगनकमलस्यापि शब्दाभासप्रतिभासित्वेन दृष्टान्तस्य साध्यविकलत्वात् । पुरोवर्तिरजततादा-त्म्यप्रतीतौ चान्यथाख्यातिस्वीकारात् । अप्रतीतावाश्रयासिद्धेः । असंसर्गाग्रह-बलेन च तद्व्यवहारे तत्रासत्वस्याप्रतीतौ हेतोरपक्षधर्मत्वात् । असत्वेनासंसर्गा-ग्रहात् पक्षधर्मताव्यवहार इति चेत् । न । सत्वेनापि तथापत्तेः । असतोऽ-कारणत्वात्कथं साक्षात्कारिप्रतीतिविषयत्वमिति चेत् । न । संस्कारोपनीत-स्याकारणस्यापि प्रत्यभिज्ञायां तत्तांशस्य प्रतीतिविषयत्वात् । प्रत्ययत्वं त्वदृ-ष्टसामग्रीप्रसूतत्वप्रयुक्तसत्यभावमित्यसिद्धप्रतिबन्धमित्यास्ताम् ।

स चायं सादृश्यानपेक्षस्तिक्तो गुड इत्यादौ भ्रमः । अन्यत्रापि तस्यारो-प्यस्मृत्युपक्षीणत्वात् । न च हस्तिनि मशकारोपापत्तिः । आरोप्य व्यावर्तका-ग्रहस्याभावात् । नीलं शार्वरं तमः इति च भ्रमः । तमो नाभावात्मकं विध्या-द्यात्मकतया वेदनात् । न च नित्यं, रात्रिंदिवविभागानुपपत्तेः । अनित्यं च न चलनात्मकं, तथाऽनवभासात् । अचलनात्मकं च न गुणवत्, आरभ्यत्वा-नारभ्यत्वाभ्यां व्याकोपात् । न निर्गुणमद्रव्यद्रव्यगं, चाक्षुषत्वात् । नानेकद्र-व्यद्रव्यगं, आलोकनिरपेक्षवेदनत्वात् । ततो भूरूपमारोपितं तम इति चेत् न । विचारासहत्वात् । स हि अनुभूयमानारोपो वा सावित्रतेजसि पित्तपी-तिमवत्, स्मर्यमाणारोपो वा नेदीयस्यणीयस्यपि महत्ववत्स्यात् । नाद्यः आलोकं विना तदनुभवात्[1] । तुल्यमभावेऽपीति चेत् । न । अभावग्रहे प्रतिपक्षापेक्षायां तद्ग्रहव्याघातात् । रूपे तु तदनपेक्षायामेव दोषात् । नेतरो गगनादेरतीन्द्रियत्वात् । क्षित्यादेरालोकसापेक्षवेदनत्वात् । ततो भावाभा

१ तदननुभ०

एवायं । शुक्रादिव्यावृत्तिनिबन्धनस्तु नीलादिव्यवहारः शषयोरिव षव्यवहारो गौडानाम् । भावत्वेन वेदनमप्यसिद्धमित्यादि तात्पर्यबुद्धावुदयतः, अथवा प्रतियोगिवाचकावच्छिन्नन्यभिलापप्रतिभासशून्यतया विधिमुखत्वाभिमानात्। एतच्चालोकप्रतियोगिकनिषेधबोधकैरन्धकारतिमिरादिपदैरवच्छिन्नस्य तस्य भासनात् । विमलं जलं तिष्ठति भूपतिरितिवत् कदाचित्त्वालोकाभावोऽधुनेत्यनेनाकारेण प्रतीयत इति । नचैकवाचकावच्छेदेनैव वस्तु प्रतिभासते, घटः कलश इति बहुशः प्रतीतेः । यदिवाऽलोकाभाव एव नीलत्वं भावत्वं चारोप्यते चलनवत्प्रतिपक्षाप्रतीतावप्रतीतिः । दोषवशादिन्द्रियविषयेषु इन्द्रियाणां प्रतीतचरसहकारिनिरपेक्षतादर्शनात् । भवति हि कामातुरस्य कामिनीसाक्षात्कारे संनिकर्षानपेक्षा आलोकानपेक्षेव परेषाम् । न च दोषाभावः । तेजोऽभावस्य सकलस्वप्रतिपक्षनिवृत्तिसाहचर्यस्यैव दोषत्वात् । अत एव दिवा तुहिनकरकरप्रसराभावेऽपि[1] नीलारोपः । नचाभावमात्रे तदारोपः[2] । अनधिगतनीलभावस्य तदनारोपो वा दोषवैचित्र्यादेवाधिष्ठाननियमोपपत्तेः । वंशोरगभ्रमवत् । न चालोकानपेक्षा दोषः । अभावग्रहे प्रतिपक्षापेक्षायामभावग्रहणव्याघातात् । न चाभावे भावधर्मानारोपः । दुःखसंयोगाभावादौ सुखविभागादिव्यवहारदर्शनात् । महाप्रलये च महत्वव्यवहारदर्शनात् । चलनारोपश्च विभिन्नदेशवर्त्तिनोरभावयोरुत्पादे पूर्वनाशे सति उत्तरजन्मनि पूर्वदेशादर्शने सत्युत्तरदेशदर्शनात् । स्मृतिविपर्ययपक्षस्त्वसंभावित एव । जाग्रतां तदनुपपत्तौ छायादिव्यवहारविलयात् । अन्यथा विश्वप्रकाशं प्रति अस्तमयप्रसंगात् । अवश्यं चैतदेवम् । अन्यथा तमःसामानाधिकरण्यप्रतीतेरनुपपत्तेः । न हि नीलं रूपं समारोपिततथाभावं वा तमः । अतिप्रसङ्गात् । किं त्वालोकमात्राभाव एवेति ॥ **इति विपर्ययः ॥**

अनध्यवसायोऽपि समुच्चिताशेषविशेषविषयो वा वाच्यो, व्याप्तिबोधवत् अनिश्चितैकविषयो[3] वा असमुच्चितनानाविषयो वा । नाद्यः । धूमो वह्निनियत इतिवत् पनसे सर्ववाचकाध्यवसायापत्तेः । नेतरः । अविद्यात्वव्याको-

१ °पि न नीला° । २ °पः । नभोगत° । ३ °यो वा समु° ।

पात् । एकं वाचकमिवाचकमपि स्पृशतीति संविदविद्येति चेत् । न । संश-यतापत्तेः । तृतीये तु संशय एवायमिति भूषणः । मैवम् । सामान्यतोऽव-गते विशेषतोऽज्ञाते जिज्ञासिते वाच्यविशेषे यदा किंशब्दाभिलापः तदानध्य-वसायः। अव्यवस्थितनानावाचकवाच्यत्वप्रतिभासे तु संशय इति । अविद्यात्वं तु विशेषव्यवहारपरिपन्थित्वादिति रम्यम् । इत्यनध्यवसायः ॥

कथं पुनः स्वप्नज्ञानमविद्या यतो यद्विद्यातो न विशिष्यते तद्विद्यात्मकं यथा सव्येतरकामिनीकुचकलशप्रतिभासः । न विशिष्यते च स्वप्नज्ञानविद्या-तः । इदं बाधितमिति चेत् । न । स्वरूपविषयफलापहारात्मकबाधविरहे विपरीतार्थोपदर्शनमात्रस्योभयत्रापि तुल्यत्वात् । अनादित्वेन पूर्वोत्तरभाव-स्यानियामकत्वात् । अव्यभिचारित्वस्य च स्वप्नेऽप्यप्रतिक्षेपात् । बाधात् तत्प्रतिक्षेप इतिचेत् न। बाधस्यैवासिद्धेः । जाग्रदवस्थायाः सजातीयप्रबन्धसं-वादात् स्वप्नस्य काकतालीयसंवादादिति चेत् । न । काकतालीयसंवादवतोऽपि चिराद्दृष्टपुनर्दर्शनादेरव्यभिचारात् । प्रबन्धसंवादवतोऽपि दीपैकत्वनिर्भासादे-र्व्यभिचारात् । अर्थक्रियासंवादविसंवादौ जागरणस्वप्नलक्षणमिति चेत् । न प्रबुद्धदृष्टार्थक्रियाचक्रस्यापि स्वप्ने विपर्यासोपलम्भात् । मिथ्याप्रवाहःस्वप्नः तद्विपरीतप्रत्ययस्तु जागरणमिति चेत् । न । प्रबुद्धदृष्टार्थक्रियावत्वस्यापि स्वो विपर्यासोपलम्भात् । मिथ्याप्रत्ययप्रवाहः स्वप्नः तद्विपरीतप्रत्ययस्तु जागरण मिति चेत् । न । मिथ्याप्रत्ययप्रवाहस्यापि पीतशङ्खगोचरस्य जागरणत्वात् प्रचुरतरमिथ्याप्रत्ययप्रवाहः स्वप्नो, भूरियथार्थप्रत्ययप्रवाहो जागरणमि चेत् । न, उन्मादाद्यर्जितप्रचुरतरविपर्ययप्रत्ययप्रवाहस्यापि जागरणत्वात् बहिरिन्द्रियप्रवृत्तिभावाभावाभ्यामर्जितं ज्ञानं स्वप्नजागरात्मकमिति चेत् न । योगिनां ध्यानसंततेरपि स्वप्नत्वप्रसंगात् । सिद्धोपभुक्तान्तःकरणजं ज्ञा स्वप्नोऽन्यज्जागरणमिति चेत् का[1] सिद्धिः । निरिन्द्रियप्रदेशे मनसोऽवस्थानम् कुतस्तर्हि सुषुप्तिः । स्वप्नज्ञानजनकस्य संस्कारस्य अदृष्टस्य वा कालविशेषस हितस्याभावात् । मैवम् । जाग्रत्प्रत्ययानामपि स्वप्नप्रत्ययवत् पूर्वपरिदृष्टवास नाजन्यत्वेन निद्राभिभूतान्तःकरणजत्वनिवृत्तेरनवधारणात् । कथं त

१ का सिद्धा ।

प्रथममेव जागरणगोचरपदार्थोपलम्भ इति चेत् । न । अनादित्वादस्य विभ्रमस्य । सजातीयावस्थाप्रबंधसंवादो जागरोऽन्यस्तु स्वप्न इति चेत् । किं साजात्यम् । जाग्रत्प्रत्ययगोचरत्वमिति चेत् । स्वप्नेऽपीदमस्तीति सजातीयप्रबन्धसंवादोऽसिद्धः । प्रबन्धबाधकादिर्बाध्यप्रबन्धो जागरितं नान्य इति चेत् । न । कचित्स्वप्नेऽपि पूर्वजाग्रत्प्रत्ययप्रवाहो मिथ्येति प्रबन्धबाधकप्रत्ययस्यादिभूतस्य सत्वात् । तदन्तर्हितजाग्रद्विज्ञप्तिसन्तानस्य च स्वापानन्तरस्वप्नवर्तिना ज्ञानेन सर्व एव जाग्रत्प्रत्ययो मिथ्येति बाध्यमानत्वात् । ततो भेदलक्षणाभावान्न विशिष्यते । जाग्रत्प्रत्ययात्स्वप्नज्ञानमिति । अत्रोच्यते । किं प्रमाणत्वेनाविशेषः स्वप्नप्रबोधाभ्यां उत अप्रमाणत्वेन स्वप्नजागरत्वाभ्याम् । नाद्यः । सिद्धस्वप्नप्रबोधभेदप्रत्ययस्यापि जागरत्वेन प्रमाणत्वाद्धेतोर्बाधात् । न द्वितीयः । अविशेषप्रत्ययस्यैवाप्रामाण्ये विशेषनिषेधव्याघातात् । न तृतीयः । अनुभवबाधितत्वात् । मिथ्यायमनुभव इति चेत् । अनुभवमिथ्यात्वग्राहकं ज्ञानं सत्यं मिथ्या वा । मिथ्या चेद्भेदानुभवः सत्य इति हेतोर्बाधः । सत्यं चेत्तदेवासत्यप्रत्ययान्न भिद्यते सत्यं वेत्यनेकान्तः । बाधितत्वाबाधितत्वाभ्यां विशेष इति चेत्, तुल्यं स्वप्नजाग्रद्बोधयोरपि । कथं तर्हि स्वप्नजाग्रद्बोधयोर्भेदव्यवहृतिः । विनापि भेदलक्षणमनुभवसिद्धत्वात्सुखदुःखवत् । तत्रानुकूलप्रतिकूलवेद्यत्वं लक्षणमिति चेत् । न । सुखदुःखातिरिक्तयोरनुकूलप्रतिकूलयोरसिद्धेः । इष्टत्वमनुकूलत्वमिति चेत् न । इच्छाया एव लक्षणभेदासिद्धेः । इच्छात्वं तदिति चेत् । न । तस्यासिद्धेः । सुखत्वं दुःखत्वं लक्षणमिति चेत् । न । तयोरेव भेदासिद्धेः । अनुभवसिद्धं तदिति चेत् । तुल्यमत्रापि । एवं जल्पवितण्डाभ्यां परिभूते वादिनि सिद्धोपप्लुतान्तःकरणज[1]प्रत्ययप्रवाह एव स्वप्न इति वादेलक्षणमनवद्यम् ।

ननु तथापि जाग्रत्प्रत्ययाः निरालम्बनाः । प्रत्ययत्वात् । स्वप्नप्रत्ययवदिति विद्याविद्याविभागोऽनुपपन्न इति चेत् । किमिदं निरालम्बनत्वम् असत्प्रकाशनशीलत्वं वा अन्यथाख्यातिरूपत्वं वा स्वात्मालम्बनत्वं वा । न तावदाद्यौ । प्रतिबन्धप्रत्ययस्य निरालम्बनत्वे हेतोः प्रतिबन्धासिद्धिप्रसंगात् ।

---

१ °णप्रत्य° ।

तत्त्वालम्बनत्वेतु तेनैव व्यभिचारात्। न तृतीयः। स्वप्नपद्धतिपतितानां विज्ञप्तीनां बाह्यालम्बनत्वेन स्वात्मालम्बनत्वासिद्धेः । तदसिद्धेः। सर्वस्यैव गौरगान्धारमधुरसुकुमारसुरभिशातेतरादिभेदस्य वेदनस्वभावत्वात् । तथा हि, यत्प्रकाशते तद्विज्ञानं यथा प्रकाशः। प्रकाशन्ते च नीलादयः। न च ज्ञानाद्भेदे प्रकाशमानत्वं संभावनीयम्। तद्धि न तावत्प्रकाशं प्रति कारणत्वं तेन समानसामग्र्या प्रतिबन्धो वा। [1]रूपपरिज्ञाने चक्षुषोऽपि प्रकाशापत्तेः। नापि प्रकाशसारूप्यं, साकारत्वे वित्तीनां बाह्यनीलादिभेदस्यासिद्धेः कस्य सारूप्यम्। तद्धि न तावदनुभवादेव व्यवस्थाप्यम् । नीलाकारद्वयाननुभवात्। नाप्याकारकादाचित्कत्वात् । तस्य भ्रान्तप्रत्ययाकारवद्वासनापरिपाककादाचित्कत्वेनैवोपपत्तेः। ज्ञानसमानरूपत्वे च बाह्यस्य ज्ञानत्वापत्तेः । सादृश्यं समानत्वमिति चेत्। न। विधिरूपस्य तस्यासिद्धेः। अनीलव्यावृत्तिर्नीलानीलधियोः सादृश्यमिति चेत्। किमनीलं बाह्यनीलाकारप्रच्युतिर्वा नीलज्ञानप्रच्युतिर्वा ज्ञानाज्ञानसाधारणनीलमात्रप्रच्युतिर्वा। नाद्यः। ज्ञानस्य बाह्यनीलप्रच्युतिनिवृत्तिरूपत्वाभावात्। न द्वितीयः। बाह्यस्य नीलज्ञानप्रच्युतिनिवृत्तिरूपत्वाभावात्। न तृतीयः। ज्ञानाज्ञानसाधारणस्य नीलमात्ररूपस्यासिद्धेः। नापि प्रकाशेन सार्धं विषयविषयिभावः। नीलतज्ज्ञानयोरतिरिक्तस्य संबन्धस्याभावात्। स्वाभाविकः संबन्ध इति चेत्। न। स्वभावप्रभवस्यापि संबन्धस्याभावात्। स्वभावः संबन्ध इति चेत्। न। असंबन्धत्वेन प्रतीयमानयोर्नीलतद्वेदनयोः संबन्धरूपताव्याघातात्। असंबन्धस्यैव संबन्धव्यवहारजनकत्वमिति चेत्। न। असंबन्धाभावाक्रान्तस्य तत्तत्सत्ताव्यवहारजनकत्वविरोधात् सर्वत्र संबन्धोच्छेदप्रसंगाच्च। तन्निरूपणाधीननिरूपणत्वं तद्विषयत्वमिति चेत्। न। विषयविषयिभावानिरुक्तौ तस्येदं निरूपणमित्यस्यैवासिद्धेः। तेन च व्यपदिश्यमानत्वमिति चेत्। न। व्यपदिश्यमानताया व्यपदेशजनितज्ञानविषयतानतिरेकात्। ज्ञानजनितव्यवहारगोचरत्वमिति चेन्न । इच्छादिरूपव्यवहारस्यैवोपेक्षाज्ञानेऽभावात्। तद्गो[2]चरस्मृतिजनकत्वमिति चेत्। स्मृतेरपि तद्गोचरताया अनिरुक्तेः। व्यवहारजननयोग्यत्वमिति चेत्। न। योग्यताया

---

१ रूपरूपिज्ञा°। २ °चरसंस्कारस्मृति°।

एवानवगमात्। सामग्रीविशेषप्रसूतत्वमिति चेत्। न तावत्सामग्र्या असाधारणज्ञानरूपजनकत्वम्। अन्वयव्यतिरेकयोरभावात्। नाप्यवान्तरविशेषो, नीलज्ञानत्वरूपापरसामान्यस्याभावात्। नीलविषयतारूपस्य विशेषस्यासिद्धेः। स्वरूपमेव ज्ञानस्य विषयित्वं नीलादेश्च विषयत्वमिति चेत्। न। स्वरूपस्य सर्वं प्रत्यविशेषात् ग्राह्यग्राहकव्यवहा[1]रानुपपत्तेः नीलादिवस्तुस्वरूपस्य सर्वसाधारणत्वोपलम्भेन ज्ञानस्यापि सर्वसाधारणत्वात्। सर्वविषयताप्रसंगाच्च। ततः प्रकाशतादात्म्यमेव प्रकाशमानत्वात्। नत्वेवं सति साध्याविशिष्टत्वं, प्रकाशमानत्वज्ञानयोरभेदात्। नाप्रकाशमानज्ञानयोरभेदेऽपि व्यावृत्तिभेदस्य सत्वात्। अप्रकाशव्यावृत्तेः साधारणताव्यावृत्तेर्वा ज्ञानरूपत्वात्, अप्रकाशमानतानिवृत्तेश्च प्रकाशमानरूपत्वात्।

ननु प्रकाशमानत्वं प्रकाशसंबन्धः प्रकाशतादात्म्यं वा। द्वयमप्यसिद्धम्। [2]अविशेषासिद्धावपि प्रकाशमानप्रत्ययगोचरस्य स्वरूपस्योभयसिद्धत्वात्। अत्रोच्यते। अभेदपक्षेऽपि किं प्रकाशस्य नीलगोचरत्वम्। नीलाकारत्वमिति चेत्। का नीलाकारता प्रकाशस्यानीलत्वसामान्ययोगः बाह्यनीलगोचरत्वं वा अनीलव्यावृत्तता वा। नाद्यौ। तयोः प्रकाशाद्भेदेन प्रकाशमानत्वानुपपत्तेः। अनीलव्यावृत्तता तु प्रकाशस्य अनीलव्यावृत्तिसंबन्धो वा प्रकाशस्वरूपत्वं वा। नाद्यः। व्यावृत्तेरलीकत्वात्। प्रकाशाद्भेदेन प्रकाशमानताविरोधाच्च। न द्वितीयः। सर्वप्रकाशमानताविरोधाच्च। न द्वितीयः। सर्वप्रकाशानां नीलाकारताप्रसंगात्। प्रकाशविशेषरूपत्वमिति चेत्। विशेषरूपत्वमप्यसाधारणरूपत्वमात्रं असाधारणैकरूपत्वं वा। नाद्यः। सर्वप्रकाशानां नीलाकारता[3]पत्तेः। नेतरः। द्वितीयनीलज्ञानस्यानीलाकारतापत्तेः। नियता एव प्रकाशभेदा येषां नीलाकारत्वमिति चेत्। भेदपक्षेऽपि यदि इयं नीलग्राहकता स्यात् को विरोधः। नीलस्वरू[4]पासंबन्धे तस्य प्रकाश इति प्रतीतिः कथमिति चेत्। स्वेन रूपेणासंबद्धस्य स्वस्य प्रकाश इति प्रतीतिः कथमिति तुल्यम्। स्वस्य प्रकाश इति नानुभवोऽपि तु व्यपदेशमात्रमिति चेत्तुल्यम्। नीलप्रकाश इत्यपि व्यपदेशे किं निमित्तमिति चेत्तुल्यं स्वप्रकाश इति व्यपदेशेऽपि। काल्पनिकोऽयं

१ °हारनियमानुप°। २ °द्धम्। न विशे°। ३ °ताप्रसङ्गात्। नि°। ४ °रूपेणासं°।

व्यपदेश इति चेत् । अस्माकमप्यौपचारिक इत्यवेहि । ज्ञानरूपं[1] चेन्नीलवि- यत्वं सर्वं प्रति साधारणं स्यात् । अभिन्नत्वमपि ज्ञानस्वरूपमेव । तदपि स- साधारण्येन व्यवह्रीयेत[2] । किं च । साधारण्यं किं सर्वसंबन्धित्वं सर्वैरेकरू- पतया प्रतीयमानत्वं वा सर्वग्राहकता वा । नाद्यः । नीलाभावात् । न द्वितीयः गृहीतृपुरुषसाकल्ये ज्ञानस्याप्येकरूपत्वेन वेद्यमानत्वात् गृहीतृतदितरसाकल्ये[3] च नीलस्यापि तत्त्वासिद्धेः । न तृतीयः । नीलस्य सर्वग्राहकत्वासिद्धेः । न ग्राह्यग्राहकयोरविशेषापत्तिः । ज्ञानत्वेनैव विशेषात् । तस्मात् प्रतिबन्धासि- मेव प्रकाशमानत्वम् । किं च साध्यसाधनयोर्व्यतिरेकः प्रतीतो न वा । चेत् व्यतिरेकासिद्धिः । प्रतीतश्चेदनैकान्तोऽज्ञानस्यापि प्रकाशमानत्वात् । प्रतीतमज्ञानं किंत्वध्यवसितमिति चेत् । कोऽध्यवसायः । तत्र व्यवहार इ- चेत् । न । देहजन्यव्यवहारस्य तत्राभावात् । व्यपदेश इति चेत् । न । तस्य- पि च तत्र ज्ञानाजनकत्वे तदीयत्वाभावात् । ज्ञानजनकत्वे तेनैव व्यभिचारा- मानसस्यापि प्रत्ययस्य तद्विषयत्वेऽविषयत्वे च विरोधात् । नीलादयोऽपि प्रकाशाद्भिन्ना एवाध्यवसीयन्ते, न प्रकाशन्त इति प्रकाशमानत्वं नीलादी- मसिद्धमस्तु । अध्यवसायबलेन वा सकलबाह्यप्रसिद्धिरस्तु । सहोपलम्भ- नियमादभेदोऽस्त्विति चेत् । न । यौगपद्योपलम्भस्य साहित्योपलम्भ- वा भेदेऽप्यविरोधात् । एकोपलम्भविषयत्वस्य स्वसंवेदनत्वासिद्धावसिद्धेः

इति स्वप्नः ॥

अविद्यानन्तरं विद्या विचार्यते । सा द्विविधा । अध्यक्षमनुमानं च अध्यक्षमपि सर्वज्ञीयमन्यथा च । सर्वज्ञासिद्धौ तत्कथम् । तथाहि, न सर्वज्ञो- ऽध्यक्षगम्यः । परबुद्धेस्तदभावात् । नापि परमाणूनां मेयत्वेनाध्यक्षतया सा- ध्यः । तेषामध्यक्षत्वव्याकोपात् । न च बुद्धिवत् स्वतोऽतीन्द्रियत्वेऽप्यध्य- त्वाविरोधः । असति विपरीततर्के प्रत्यक्षाणुत्वयोः स्वारसिकविरोधात् । वि- परीततर्कसत्वाच्च । चक्षुरादीनां शक्तिविरहाद्रसवत्तत्राप्रवृत्तेः । मनसो बहिः स्वातन्त्र्यात् । स्वप्ने सिद्धासहकारितावद्योगजधर्मसहकारित्वेन नयनाद्यारम्भ- यर्थ्यात् । स्वप्नस्य च स्मृतिविपर्यासत्वात् । नानापुरुषाध्यक्षत्वे असर्वज्ञत्वा-

---

१ °रूपत्वं चे° । २ °वह्रियते । ३ °हीते त° ।

अन्यथा प्रतिबन्धाभावात्। वेदनतारतम्यस्य क्वचिद्बहुज्ञ एव विश्रान्तेः। अपकर्षतारतम्यादेकज्ञतामात्रापत्तेश्च[1]। मनुष्यादिवत् क्वचित्तुरगादिजातिभेदेऽपि सार्वज्ञ्यापत्तेः। भावनाभ्यासस्य च भाव्यविषयत्वेन सर्वविषयज्ञानजनकत्वानुपपत्तेः। तथैव शक्तेरवसायात्। कर्तुः कर्तव्यतातिशयदर्शनाददेहिवदेहिनोऽपि सर्वकर्तृतापत्तेः। कायव्यूहादिकृतेरप्रामाणिकत्वात्। तथाविधादृष्टवशादेवोपपत्तेः। अभुक्तस्यैव वा कर्मणः क्षयाद्विपरीतनिश्चयाच्च। ज्ञानजातीयं कतिपयविषयतान्निष्ठं तेन समं निरुपाधित्वात् यदेवं तदेवं यथा धूमो वह्निना। विपक्षेतूक्ता एव तर्काः। तथा च सर्वमिदमनुपपन्नमिति चेत्। मैवम्। विरोधितर्काणां विपर्ययापर्यवसानात्। अणूनामप्रत्यक्षत्वे प्रत्यक्षत्वप्रमेयत्वयोर्निरुपाधिसाहचर्यव्याकोपात्। न चात्र रूपत्वं महत्त्वं वोपाधिः। रूपादेरपि प्रत्यक्षत्वात्। रूपे रूपत्वं द्रव्येषु महत्त्वं रूपत्वं चेति चेत्। न। सुखादेरात्मनश्च प्रत्यक्षत्वोपलम्भात्। योग्यविशेषगुणवत्त्वमिति चेत्। न। गुणादावभावात्। तत्तद्रूपभेदमाश्रित्य योग्यत्वं तेषामध्यक्षतायामन्वयव्यतिरेकावुपलभ्येते इति चेत्। न। तेषां प्रत्यक्षताविशेषव्यापकत्वेन प्रत्यक्षत्वमात्रेऽनुपाधित्वात्। प्रत्यक्षसामग्रीमध्यपातित्वप्रयुक्तं प्रत्यक्षत्वमिति चेत्। न। अस्य साध्याव्याप्तत्वेन धूमे आर्द्रेन्धनवदनुपाधित्वात्। प्रत्यक्षतायां दृष्टान्वयव्यतिरेकत्वप्रयुक्तं प्रत्यक्षत्वं, अणूनां तु नियमेनास्मदादीनां परोक्षत्वमिति चेत्। न। परबुद्ध्यादेरन्यथाभावेऽपि प्रत्यक्षत्वात्। परप्रत्यक्षं प्रति परस्यान्वयव्यतिरेकाविति चेत्। तुल्यं योगिप्रत्यक्षत्वेऽपि। बुद्धित्वात्तत्रानुमानमिति चेन्न। अणुष्वपि पृथिवीत्वादेः सत्वात्। एकपुरुषापरोक्षबोधाविषयत्वं[2] च कल्पनालाघवात्। प्रतिबन्धस्य चानुपाधित्वेन निश्चयात्। रसचाक्षुषतायां रूपैकनियमेन्द्रियवेद्यत्वव्याघातात्। अनियतेन्द्रियवेद्यत्वे वेदकस्य मनस्त्वेन सापेक्षनिरपेक्षत्वाभ्यां सिद्धसाधनव्याघातात्[3]। तैजसेन्द्रियवेद्यत्वेऽपि रूपैकनियमात्। तैजसत्वावगतौ व्याघातात्। देहव्यूहमाश्रित्य स्पर्शादावनापत्तेः। परेच्छा च स्वतोऽप्रत्यक्षेति परस्यापि प्रत्यक्षता[4] न स्यात्। भावे वा परमानसतावत्

१ °कज्ञातामा°। काज्ञतामा°। २ °क्षविष°। ३ °धनव्याकोपात्। ४ °ता स्यात्।

परचाक्षुषतापि स्यात् । अप्रत्यक्षा अणव इत्यत्र तु अस्मदादियोगिविशेषा॰ क्षया सिद्धसाधनव्याघातात् । प्राणित्वादेः कीर्तितुतातिदृष्टान्तहतत्वात् "द्वे ब्रह्मणी वेदितव्ये," "पश्यत्यचक्षुः" इत्याद्यागमसंभवाच्चेति निराकुल॰ तत् । इति योगी ॥

लौकिकमविकल्पकमन्यच्च । शब्दादिसंयोजनारहितमविकल्पकम् । वाच्य॰ वाचकतादात्म्यात्तदसिद्धम् । तथाहि । घटोऽयमित्याद्यक्षराकारतादात्म्य॰ नुभूयते। न च घटत्वजात्यनुभवानन्तरं स्मर्यमाणघटशब्दावच्छिन्नघटत्वजा॰ योगमात्रमवभासते न तु तादात्म्यमिति वाच्यम् । घटोऽयमिति प्रत्ययस्यै॰ त्वेनानुभूयमानत्वात् । प्रत्यभिज्ञानवत् । अन्यथा तस्यापि स्मरणग्रहणात्म॰ त्वेन एकत्वाभावप्रसंगात् । न चेह स्मृतिचिह्नभूतस्तत्ताकारः प्रकाशते, वा चाक्षुषवाचकाकारोपधानं जातेर्व्यक्तेर्वा चाक्षुषे चेतसि प्रकाशते, न शब्दार्थयोर्भिन्नेन्द्रियवेद्यत्वं व्युत्पत्त्याद्यपेक्षा च न स्यादिति वाच्यम् । अ॰ त्मभूतानात्मभूतयोर्वाच्यवाचकाकारयोर्भेदेऽपि [1]सुसदृशत्वेन वकारभेद इ॰ भे[2]दानुमानात् । मैवम् । अननुभवात् । न ह्ययं पुरोवर्तिघटशब्द इति क॰ दनुभवति । न चाभिलापरूपं नयनस्य गोचरः । न च स्मृतेस्तत्ता चिह्न॰ ता । अनुभूतवर्णस्मृतौ हरिहरादिस्मृतौ च व्यभिचारात् । न च शब्दसंस॰ प्रत्यक्षगोचरः । ततो जातिसंसर्गमात्रमत्रावभासते, शब्दस्तु व्युत्पत्तिसम॰ वगतोऽत्र स्मर्यते । न च तस्य केनचित्संसर्गोऽवभासते, यदि तु तत्संस॰ ऽवभासत इति मन्यसे तदानुमानात् व्यक्तिरियं घटशब्दवाच्या घटजाती॰ त्वात् पूर्वघटवत्, घटजातिर्घटशब्दवाच्या तेन सह गृहीतसंगतिकत्वा॰ वाच्यम् । एकस्य च तरुशिखरिभूरुहादिनानाकारतादात्म्यप्रतीतिविरोधात् इति निर्विकल्पकम् ॥

सविकल्पकं योजितनिर्भासि । तच्चाध्यक्षं साक्षात्कारित्वेनानुभवात् । चैतदौपाधिकम्। अनुभवस्य तदानीमतीतत्वात्। न चैतत्तद्भेदाग्रहनिबन्धन॰ अनागतोपाधिभेदाग्रहादनुभवेऽपि वैपरीत्यापत्तेः । अत्राभिलापसं[3]भेदो बाध॰ मिति चेत् । न । तत्रापि तद्विरहस्य तुल्यत्वात् । तत्संदिग्धव्यतिरेकमि॰

१ °भेदेन स्वस° । २ °दाभिमानात् । ३ °संसर्गो बा° ।

चेत्तुल्यम् । तादृशं यदि नेन्द्रियजं तदेन्द्रियजमेव न स्यात् । तस्य चार्थाधिपत्यनियमात्तज्जन्यम् । तच्च सिद्धमित्यध्यक्षम् । **इति सविकल्पकम् ॥**

तत्रापि प्रत्यभिज्ञानमेकं तत्तेदन्तावभासि । न चात्र तत्तेदन्ते पारोक्ष्यापारोक्ष्ये येन विरोधि धर्मसंसर्गोच्छेदः स्यात् । परोक्षार्थत्वेऽपि सोऽग्निमानयमग्निमानिति स्फुरणात् । नापि विषयभेदः । एकस्यैवानुमानस्य परनये परोक्षापरोक्षविषयकत्वात् । नापि कारणभेदः । तस्यैवानुभवस्य स्मृतिजन्यत्वात् । न च विरुद्धधर्मा[1]संसर्गवतोऽपि भेद इति ॥

## इति न्यायलीलावत्यां प्रत्यक्षम् ।

अथानुमानमुच्यते । तदसिद्धमध्यक्षस्यैवानुमानत्वात् । तथाहि । तत्प्रतिबन्धसिद्धिसापेक्षम् । स च न सामान्ययोः, यत्र धूमत्वं यच्च धूमत्वमिति वा नियमायोगात् । व्यक्त्यन्तर्भावेन नियतत्वे कतिपयान्तर्भावेन सर्वोपसंहारवती व्याप्तिः । समग्रान्तर्भावस्य तु देशकालव्यवधेर्भूयोदर्शनानां तत्राभावे अशक्यत्वात् । अत एव न व्यक्तीनां न चोभयोरिति । तस्मादनाकलितव्यभिचारदहनसहचरितधूमादिसंवेदनवशेन कृशानुमात्रमत्र स्मर्यते । तेन च स्मार्यमाणेनासंसर्गाग्रहात् । संसर्गव्यवहारे संवादविसंवादाभ्यामनुमानतदाभासव्यवस्थेत्यस्तु । मैवम् । नह्ययमर्थः प्रत्यक्षगोचरः । तदभावात् । अनुमानप्रामाण्यस्वीकारे तेनैव व्याघातः । नापि सांशयिकः । अनुमानेन साधनदूषणव्यवस्थानुपपत्तेः । एवमेवास्त्विति चेत् । न । अनिश्चितप्रतिबन्धत्वान्नेदमनुमानं तथाभूतं च व्याप्तिनिश्चयहेतोरभावादिति स्वयमेवानुमानेन दूषणोपसंहारात् । वादिप्रतिवादिसाधनयोश्च प्रत्यक्षेण संवादानुपलब्धेः । अनुमानस्य प्रमाणासंवादानुपलब्धेः । अनुमानस्य प्रमाणान्तरसंवादं विना प्रमाणव्यवहारगोचरत्वानङ्गीकारात् । संसर्गज्ञानस्यैव संसर्गव्यवहारहेतुत्वात् । न च प्रतिबन्धावेदनम् । व्यक्तिमात्रसहितजातिनिर्भासात् । मात्रार्थस्यापि पुरस्कृतजातिद्वयातिरिक्तव्यक्तिविशेषणानुपादानरूपत्वात् । ईदृशस्य कतिपयविषयभूयोदर्शनजसंस्कारसचिवबाह्येन्द्रियवेद्यत्वात् । तथैव शक्तेरवसायात् । अन्यथोपादानादिव्यवहारविलयात् । नहि दृष्टमुपादेयमुपात्तत्वात् । नाप्य-

---

१ °धर्मसंसर्ग° ।

नागतम्। अनवगतत्वात्। न च तदेवानुमितम्। अनवगतनियमत्वात्। न च जातिरनुमेया। तस्या अनुपादेयत्वेनानुमानविरोधात्। न च जातिः कारणसंबन्धानुपपत्तेर्व्यक्तिमाक्षिपति। हेतौ सत्यनन्तरं[1] भावस्य हेत्वभावेऽभावस्य जातावनुपपत्तेः। अस्तु जातिमती व्यक्तिरिति चेत्। न। उपादेयव्यक्तेरनवगमात्। ततो जातिमत्तयाऽशेषव्यक्तिनिर्भासस्तावत् सिद्धः। अन्यथा चेतनमात्रप्रवृत्तिविलयापत्तेः। अत्र च कतिपयव्यक्तिगोचरसंस्कारसहकृतस्य[2] सचक्षुष एव सामर्थ्यम्। अनन्यथासिद्धान्वयव्यतिरेकबलात् दोषसहकारिवशादसंनिहितपदार्थप्रतिभास[3] इव विपर्ययप्रतिपत्तिषु जातेश्च कार्यत्वेन साहचर्यविरोधात्॥ **इत्यनुमानम्॥**

का पुनर्व्याप्तिः। साधनस्य साध्यसाहित्यं कार्त्स्न्येन न पुनरनुपाधित्वं[4], अनैकान्तिके सोपाधित्वोद्भावनापत्तेः। नापि साध्याभावविरोधः। अन्वयिनि प्रतिबन्धासिद्धिप्राप्तेः। किं पुनरस्या लक्षणम्। अनुपाधित्वम्[5]। किं पुनरुपाधित्वम्। साध्यकृत्स्नसहचारिणः साधनैकदेशवृत्तित्वम्। अत एव न कृतकत्वे साधने सावयवत्वम्। वैपरीत्ये वा नोपाधित्वम्। स चायं क्वचिन्निश्चितोभयरूपः। यथा प्रमेयत्वे कृतकत्वम्। क्वचिन्निश्चितान्यतररूपः। यथा मैत्रतनयत्वे शाकाद्याहारपरिणतिः। क्वचिन्निश्चितचरमरूपः[6]। यथा पार्थिवत्वे प्रशिथिलसंयोगित्वम्। अनिश्चितोभयरूपोऽनिरूपितरूपश्च देशकालसाध्येतरवृत्तित्वे चानुमानमात्रव्यवहारविच्छेदकत्वान्नोपाधिः। उन्नीयते च बाधव्यभिचारानुकूलतर्काभावप्रतिकूलतर्कैः, यथा दहनेतरत्वं कृतकत्वे, प्रमेयत्वे कृतकत्वं, मैत्रतनयत्वे शाकाद्याहारपरिणतिः। उपलभ्यमानस्पर्शत्वे चाक्षुषत्वमिति। **इति व्याप्तिः॥**

अथ कस्तर्कः। एकधर्माभ्युपगमे द्वितीयस्य नियतप्राप्तिरूपः। ननु किमेतस्य फलं। विपक्षजिज्ञासानिवृत्तिः शङ्कानिवृत्तिर्वा तन्न्यूनता वा। नाद्यः। अनुमानादेव तत्सिद्धेः। न द्वितीयः। अनुमानवैयर्थ्यात्। निश्चयार्थ

---

१ सत्यम्। अनन्तरभा°। २ °स्य चक्षु°। ३ °दार्थस्रार्थप्रति°। ४ °रनौपाधि°
५ °धिकत्वम्। ६ °मस्वरू°।

तदिति चेत् । न । तत एव शङ्कानिवृत्तेरपि तत्सिद्धेः । न तृतीयः । अन्यूनाया न्यूनाया वा अनुमाननिवर्तनीयत्वेन तन्न्यूनत्वापादनवैयर्थ्यात् । अनुमानं करणतया व्यापारत्वेन तर्कमपेक्षत इति चेत् । न । दात्रादौ दृढमुष्टिनिपीडनादिव्यापारव्यतिरेके छिदानुपपत्तिवत्तर्कज्ञानं[1] विना लिङ्गादनुमितिव्यतिरेकादर्शनात् । स्वज्ञानं वा लिङ्गस्यावान्तरव्यापारः स्यात्तदनुपकारके नेदमनुमानाङ्गम् । अत्रोच्यते । अनुमानानुकूलप्रतिबन्धानिश्चयोत्पत्तौ[2] व्यभिचारशङ्कानिवृत्तिद्वारेणास्योपयोगात् । स चायमाहार्यारोपरूपः । आरोपितहेतुसमुत्थत्वात् बाधितविषयत्वाच्च । कोटिद्वयोपनिपाते चैककोटिपरिग्रहस्य यद्यर्थत्वात् । तथापि किं भूयोदर्शनापेक्षया, व्यभिचारसंदेहस्य तत्रापि सत्त्वात् । विपक्षे बाधकस्यैतदभावेऽपि तुल्यत्वात् । उपाध्यभावस्य चानुकूलतर्कवेद्यत्वादिति चेत् । मैवम् । प्रथमतो नियतसंवेदनाभावात् । अन्यथोत्तरत्र संदेहानुपपत्तेः । ब्राह्मणत्वरत्नत्वसादृश्यानां तथा सत्यवभासे उत्तरकाले प्रचुरतरदर्शनस्य विपरीतशङ्कामात्रविच्छेदफलतापत्तेः । भूयः साहित्ये तु नियतसंवेदनव्यवस्थितौ तत्प्रामाण्य एव संदेहात् । तर्कस्यैतदपनोदकत्वात् ।

तदेतद्व्याप्तिस्मृतिपक्षधर्मतासंवेदनात्मकमन्याननुभवात् कार्यस्यास्मादेवोपपत्तेः । न च लिङ्गसंवेदनं वस्तुतस्तद्विषयं विदूरात्तद्विशेषानवभासेऽजनकं, लिङ्गत्वोल्लेखितया तु जनकत्वमेकवेदन एव पर्यवस्यतीति वाच्यम् । नियमसंवेदनपुरस्कृतजात्युल्लेखादेवोपपत्तेः । अन्यथा परामर्शेऽप्युपप्लवात् । न च पक्षधर्मतासंवेदनं हेतोरेव जातमित्युपनयस्य विशिष्टविषयतेति[3] वाच्यम् । तस्य पराङ्गतापन्नलिङ्गमात्रविषयत्वादिति चेत् । न यथा व्यभिचाराग्रहेऽपि व्यभिचारशङ्कायामपि नानुमानम्, तथाव्याप्यपक्षधर्मयोर्वैजात्याग्रहेऽपि वैजात्यशङ्कायां नानुमानं, हेतोर्व्याप्यत्वासिद्धत्वात् । तस्माद्व्याप्यपक्षधर्मयोरेकजातीयत्वेन वेदनमनुमितिकारणं वाच्यम् । स एव परामर्श इति ।

## इति सपरिकरमनुमानम् ॥

शब्दस्तु न मानान्तरम् । पदानि स्मारितार्थसंसर्गविज्ञप्तिपूर्वकाणि योग्यतासत्तिमत्त्वे सति संसृष्टार्थपरत्वात् । गामभ्याजेति परत्वात् गामभ्या-

---

१ °ज्ञाने वि° २ °कूलप्रतिबन्धनिश्चयो° । ३ °स्य पिण्डितविष° ।

जेति पदकदम्बवदित्यनुमानादेव साध्यसिद्धेः। न च निराकाङ्क्षेण व्यभिचारः। तत्र संसृष्टार्थपरत्वस्यैवाभावात्। तात्पर्यं च ज्ञातं अर्थप्रतीतिकारणम्। श्वेतो धावतीत्यादौ लक्षणायां च तथादर्शनात्। संसृष्टार्थपरत्वं चानन्यथासिद्धसंभूयोच्चारणबलादेवावधार्यत इति। **इति शब्दभङ्गः ॥**

उपमानं च न मानान्तरम्। अनुमानादेव तदर्थसिद्धेः। यो यत्रासति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचको यथा गोशब्दो गोजातीयस्य प्रयुज्यते। नायमसति वृत्त्यन्तरे प्रतिभासमानजातीय इति। न चायमसिद्धः। मुख्यानुपपत्तिं विना उपचारस्यासंभवात्। सादृश्यवति प्रयोगस्य कल्पनागौरवप्रतिहतत्वात्। व्यक्तिषु प्रयोगस्यानन्त्यदूषितत्वात्। नूनमयमेतज्जातीयाभिधानाय प्रयुज्यत इति निश्चयोपपत्तेः। न चेदेवमुपमानेऽपि वृत्त्यन्तरनिमित्तान्तरविषयविशिष्टप्रयोगसंभावनायामपेक्षितासिद्धिप्रसंगात्। तथा च तत्वकौमुद्यामाचार्यः एवमेवोपमानं प्रतिचिक्षेप। **किरणावलीकारस्तु** कल्पनालाघवात् सादृश्यविशिष्टव्यक्तिवाच्यताप्रतिपादकत्वेऽतिदेशवाक्यस्य प्रतिक्षिप्ते उपलक्षणीयेन गवयशब्दवाच्यतार्थयोगो गवयशब्दवाच्य इत्यतो भासते गङ्गायां घोष इतिवत्। न च वाच्यं लक्षणस्वरूपान्वये सामानाधिकरण्येनैव पर्यवसानम्, अत्र तु श्रुतान्वयानुपपत्तेः उपलक्षणीयव्यवस्थितिरिति। यतो द्विविधं सामानाधिकरण्यम्। शाब्दं आर्थं च। तत्राद्यस्य न कदाचिदनुपपत्तिः, माता वन्ध्येति दर्शनात्। द्वितीये तु न क्रियाकारकान्वयमात्रस्य, गङ्गायां घोष इत्यत्रापि सप्तमीप्रथमान्तयोराधाराधेयभावस्य प्रतिभासनात्। वास्तवं तु नास्त्येव। न हि गोसदृशो गवयशब्दवाच्य इत्युपपद्यते। सादृश्यनिमित्ततायास्त्वयैवोक्तत्वात्। उपलक्षणीयमादाय तूपपत्तिर्गङ्गायामितिवत् अत्रापि तुल्येति नोपमानं मानान्तरमित्याह। प्रलपितमेतत्। विचारासहत्वात्। तथाहि। केन गवयशब्दवाच्यतासामानाधिकरण्यमात्रमनुपपन्नम्। किं गोसादृश्येन उत तदीयगवयशब्दप्रवृत्तिनिमित्ततया। तथापि किमतिदेशवाक्यव्यक्तया उत्तरकालीनविमर्शसंभावितया वा। नाद्यः। केशरो वृक्षशब्दवाच्य इतिवदुपपत्तेः। नेतरः। निमित्ततोपलक्षणतौदासीन्येन[1] वस्तुतोऽन्यतररूपि-

---

१ °न्येऽपि व°।

णोऽप्यस्य शाब्दत्वात् । नान्त्यः । उदासीनस्वभावस्य शब्दावेदितत्वेन विरम्य-व्यापारायोगात् । तत्रापि गङ्गार्थमात्रे घोष इति पर्यवसानं स्यादिति चेत् । तेन जलमयस्यैव गङ्गाशब्दवाच्यत्वोपलम्भात् । तत्रचानुपपत्तेः । अर्थान्त-रशङ्कापि स्यादिति चेत् । न । एवं सति स्थितेऽप्युपचारमात्रविलयात् ।

नन्वेवं सादृश्ये निमित्तत्वेनानुपलब्धेः कस्यचिद्भ्रान्त्यैवमपि स्यादिति चेत् । न । तं प्रति मानव्यवहाराभावात् । **शाबरं** तूपमानमनुमानमेव, स गौरनेन सदृशः स्वसादृश्येनैतदवच्छेदकत्वात्, यदेवं तदेवं यथा भ्रात्रा भगिनीति **इत्युपमानभङ्गः ।**

नापिचार्थापत्तिः पृथगुपलभ्यते । यद्धि यदभावेन नियतानुपपत्ति तत्तद्व्य तिरेकनियमवदेवेति क्वचिदुपलब्धमुपपादकं कल्पयति न वा । न चेदतिप्र सक्तिः । उपलब्धं चेत् नियमपक्षधर्मतावद्व्यतिरेक्येव । अनुपपद्यमानस्योपपा दकासत्वे विरोधो गमक इति तु मानमिति चेत् । न । अनुपलब्धेरप्यनुप-लभ्यमानसत्वविरोधोऽर्थापत्तिरस्त्विति अभावविलयापत्तेरिति प्रसिद्धं चैतदि-त्यलमनेन । **इत्यर्थापत्तिभङ्गः ।**

प्रचुरसाहचर्यसंवेदनात् बुद्धिरबाधिता संभवः । यथा संभवति मेघे जलमिति । तच्चाध्यक्षवत् क्वचिद्व्यभिचारेऽपि मानान्तरमेवेति चेत् । न । अस्या न्यूनकोटिशङ्कात्मकत्वात् । व्यभिचारिणोऽव्यभिचारिसंवेदनानुपपत्तेः । **इति संभवभङ्गः ।**

संदिग्धाप्तोक्तत्वप्रवादपारम्पर्यमैतिह्यम् । कथमन्यथा वेदः प्रमाणमिति चेत् । न । तत्प्रवादपारम्पर्यस्यादरपरिग्रहादेवाप्तोक्तत्वानुमानात् । **इति ऐतिह्यभङ्गः ॥**

अभावो मानान्तरम् । न ह्यनुपलम्भानपेक्षं नयनमभावग्राहि । इदं रजत-मिति विभ्रमाभावापत्तेः । न च तदकरणं, तल्लक्षणानां व्यापारवत्कारकान्तर-चरमभावादीनामव्यावृत्तेः । न च नयनमपि करणमेकत्रोभयनिषेधादिति । नयनं भूतल एवान्यथासिद्धमिति चेत् । न । दोषबलात्तद्गतव्यावर्तकधर्मा-

---

१ °त्वेनानुपपत्तेः क° ।

नुपलम्भवदभावस्याप्यनुपलम्भेऽनुपलब्धेरकारणत्वात् । अभावानुपलम्भेनैव भावग्रहापत्तेश्च । तथा सतीन्द्रियमनवकाशमिति चेत् । न । भावभेदे[1] एव सावकाशत्वात् । तुल्यन्यायेनैव विवेको न शक्य इति चेत् । न । अस्याभावेऽपि तुल्यत्वात् । विस्तृतं चैवं शास्त्र एवेत्यलमनेन ।

अभाव एव मूलभूतोऽसंभवी कुतो माने[2]भेदचिन्ता । नास्तीति धीरस्तीति चेत् । न । अस्या आश्रयस्वरूपभेदालम्बनत्वात् । तथाहि । अस्ति तावद्भावाभावोदासीनमाश्रयस्वरूपम् । कीदृश्यन्यथाभावः समवैति । न तावत्तद्वति । आत्माश्रयत्वात् । नापि तज्जातीयवति । अनवस्थितेः । नापि तद्धीने । भावाभावयोरविरोधापत्तेः । भावाभावयोश्च नास्तीति व्यवहारदर्शनात् । घटाभावेऽपि यदि घटोऽस्ति उपलभ्येत । नास्तीति चेदभावान्तरं । न चेत्सिद्धमीहितम् । घटे च घटतादात्म्याभावो नास्तीति यदि घटविधिः तदानवस्था । अथाश्रयस्वरूपम् । उक्तमुत्तरम् । एवं घटाभावपटाभावयोः प्रागभावध्वंसयोर्नैक्यं नान्योन्यसंसर्गिता वेति विकल्प्य दूषणमभिधानीयमिति चेत् । मैवम् । विचारासहत्वात् । किमिदं परिपन्थितर्कमात्रं यदि भूतलौदासीन्यं न स्यात् तदा अभावो न संबध्येतेति, विपर्ययपर्यवसानादाश्रयभेदसाधनं वा । नाद्यः । आपादनमात्रस्योपालम्भानङ्गत्वात् । नेतरः । संबध्यते चाभाव इत्यात्मनो विपर्ययस्य स्व[3]तोऽसिद्धेः । परसिद्धेः परसिद्धेन परस्यापादनमिदमाभासं सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वादितिवदात्मप्रतिक्षेपकम् । अत एव संबन्धप्रश्नोऽसंगतः । अतिरेकिणस्तस्यासिद्धेः । जन्मप्रश्नेऽपि प्रागसत्वोपलक्षितं रूपं कीदृशि अभाववति यदैव तेन ताद्रूप्यं तदैव तेन तद्भाववत् । अथ प्राक्कालमाश्रित्य प्रश्नः । तदा भाववति । अथान्तरालं कालमाश्रित्य प्रश्नः । तदा विरोधः । इदं सर्वलयोत्पत्तिप्रतिक्षेपकं सत्कार्यवाद[4]मनुपततीति महदिन्द्रजालम् । घटाभाव एव च घटनास्तिता । अतिरेकानवस्थितेः । न चैवं प्रकृतेऽपि । भूतलस्वरूपस्यातिप्रसंगत्वात् । ततः संबन्धवदिदमवश्याङ्गीकर्तव्यम् । घटाभावे पटो नास्तीत्यत्र का वार्ता । प्रकृतैव । तर्हि सापि पटनास्तितेति सर्वप्रतिपक्षविरहे जगच्छून्यं स्यादित्यस्तपन्थानमनु-

१ °भेदमादायैवसा° । २ मानचिन्ता । ३ °स्वतोऽप्यसि° । ४ °दमापततीति° ।

सरेति चेत्। मैवम्। स्वरूपेण तन्निषेधव्यवहारविषयत्वेऽपि कश्चित्तद्विरोधिस्वभावो मध्यस्थश्चेति संभवात्। वस्तुवैचित्र्यस्यापर्यनुयोज्यत्वात् इति। सघटजातीयभूतलात्पृथग्भूतलमिति चेत्। न। भूतलत्वेन पृथक्त्वस्यानुपपत्तेः। साधारणधर्मस्याभेदकत्वात्। न हि तरुत्वेन तालस्तमालाद्व्यावर्तते। नापि सघटत्वेन विरोधात्। अघटस्वीकारे भावस्वीकारात्। असति बाधके व्यावृत्तेरसाधनधर्मजत्वात्। सघटभूतलबुद्धेरन्याभूतलबुद्धिरभावव्यवहृतिरिति चेत्। न। अभावानङ्गीकारे तस्यां सघटभूतलबुद्धिव्यावृत्तव्यवहारस्यैव कर्तुमशक्यत्वात्। स्वरूपभेदव्यवहारस्य सघटभूतलबुद्धावपि सत्वात्। असति सघटभूतलबुद्धित्वे स्वरूपभेदव्यवहार इति चेत्। न। अभावस्वीकारात्। असति व्यावर्तकधर्मे व्यावृत्तिव्यवहारानुपपत्तेः। सर्वत्र व्यावृत्तव्यवहारस्य तत्प्रतिबन्धोपलब्धेः। अत इयं किं भूतलबुद्धित्वेन व्यावर्तते अथ घटाविषयत्वेन। नाद्यः। तस्यामपि भूतलबुद्धित्वावधारणात्। न द्वितीयः। अभावस्वीकारात्। सघटभूतलबुद्धिमात्रापेक्षया रूपभेद इति चेत्। न। साधारणधर्मावभासे तन्मात्रापेक्षया रूपभेदव्यवहारस्यैवापहारात्। न हि गौर्गौ-[1]स्वरूपाद्व्यावर्तते। गोत्वेन ततो भवन्नयं विभिन्नव्यवहारोऽसाधारणघटाद्यविषयत्वप्रतीतिनिबन्धनः। अपि च भूतलव्यवहारविलक्षणो नास्तीति व्यवहारो भूतलव्यतिरिक्तव्यवहर्तव्यप्रकाशनिबन्धनः, कलशव्यवहारवत्। न च सघटभूतलविलक्षणं भूतलविलक्षणं वा प्रमेयं नावभासते। अन्यथा एकस्यैव सामान्यस्य व्यञ्जकभेदेन वस्तुस्वरूपस्यैव वाऽभिन्नस्य चित्राकारजगद्व्यवहारगोचरत्वमनिवार्यमिति। घटे च घटाभावसंसर्गनिषेधो घट एव नतु प्रकृते ऽतिप्रसक्तेः। प्रागभावप्रध्वंसयोरन्योन्यसंसार्गितानिषेधस्वरूपमेवाभावः। संबन्धिसंबन्धयोरिव संसर्गिताविधौ नैक्यमित्यत्र तु अन्योन्याभावोऽवसर एव वक्ष्यामः। परस्पराभावरूपतापत्तिस्त्वविरोधिस्वभावत्वेन व्युदस्तेति सिद्धस्तावदभावः॥

किं पुनरभावाभिधेयमिति विचार्यते। न तावत्सामान्यम्। तस्य परसामान्यनियतत्वात्। नापि भावविरोधित्वम्। अन्योन्याभावे तदभावात्।

---

१ °गौरूपा°।

तदर्थानिरुक्तेश्च । सहानवस्थानं[1] तदिति चेत् । न । अत्रापि नञर्थाभि[2]धाने-ऽनवस्था । अन्यथा वैयर्थ्यम् । नापि भावानात्मकत्वनिषेध्यनिरूप्यत्वं वा । तदनिरुक्तेः । नापि भावान्यत्वम् । स्वरूपस्याननुगतेः । अनुगतस्यासिद्धेः । नास्तीति बुद्धिवेद्यत्वं तदिति चेत् । न । तदालम्बनस्यैवानुगतस्यासत्वात् । भावेन स्वभावप्रत्यासन्नत्वं तदिति चेत् । न । समवायादावपि अभावत्वप्रसंगात् । मैवम् । सत्तासंबन्धबोधसामग्रीविधुरस्य सत्ताविरहस्यैवाभावप्रत्ययहेतुत्वात् । स च नञर्थनिरुक्तिमन्तरेणापि स्वग्राहकमानसामर्थ्यात् स्वेन रूपेणावभासमानस्य भावप्रत्यासत्त्या सर्वभावेष्वसंबद्ध एवाभावप्रत्ययं करोति समवाय इव समवायिव्यवहारम् । न च स्वात्मन्यभावव्यवहारकर्तृत्वविरोधः, प्रमेयत्ववदविरोधात् । भावबुद्ध्यविषयत्वं वाऽभावत्वम् ।

भिन्नरूपस्वभावेषु स्वे च रूपे च कश्चन ।
असंबद्धोऽप्यभावात्मा तुल्यबोधप्रबोधकः ॥
प्रमेयत्वं यथान्यत्र स्वेच रूपे तथाविधम् ।
व्यवहारं तनोत्येव विरोधं भजते न वा ॥
भावत्वबुद्धिरेकैव विषयाभावयन्त्रिता ।
नास्तीत्यनुगताकारव्यवहारप्रवर्तिनी ॥

एवं सत्यभावमतिव्यर्थता इति चेत् । न । तस्य सामान्यविशेषविषयसाकाङ्क्षत्वे सामान्यव्यवस्थाया एवापेक्षणात् । स पुनश्चतुर्धा । प्रागप्रध्वंसात्यन्तान्योन्याभावात्मा । उत्तरैकावधिरभावः प्रागभावः । प्रागेकावधिरभावो ध्वंसः । प्रागभावनिवृत्तिनिवृत्तौ तदुन्मज्जनापत्तिरिति चेत् । न । ध्वंसस्यापि तद्विरोधित्वात् । एवंसति भावाभावनिवृत्त्या तदुभयात्मकतापत्तिरिति चेत् । न । विधिमुखवेद्यत्वावेद्यत्वयोस्तल्लक्षणत्वात् । तन्निषेधे निषेधविरोधावपि प्रागभावाविधानेऽन्योन्याभावात्मकत्वं भावाभावयोर्भज्येत । एकतरनिषेधेऽप्यपरस्याविधानादिति चेत् । न । एकप्रतियोगिनोरन्यतरनिषेधस्यान्यतरविधाननियमात् । उभयविरोधिनि[3] तु घटवत्तदभावात् । तथापि

१ °स्थानात्तदि° । २ °नञ्मात्राभि° । ३ °रोधनिमित्तघट° ।

परस्पराभावात्मकत्वं कुत इति प्रश्नेऽपि अन्यतरविषयस्यान्यतरविधिनियमाभावेऽपि एकतरविधेरपरनिषेधनियामकत्वादिदमुत्तरम्। नहि प्रध्वंसविधौ न प्रागभावनिषेधः। तद्विधौ च न प्रध्वंसनिषेधः। एवं सति ध्वंसोऽपि नश्येत्। कृतकत्वात्। प्रागभावोऽपि जायेत। नाशित्वात्। उन्मज्जनापत्तेश्चिरमिह निहतत्वात्। अन्यथा तु प्रकृतेऽपि न समाधिरिति चेत्। न। असंभवद्विरुद्धधर्मासंसर्गप्रत्यभिज्ञानप्रतिक्षिप्तत्वादनुमानानां लाघवाच्च। पूर्वोत्तरावधिरहितस्तु संसर्गप्रतियोगिकोऽभावोऽत्यन्ताभावः।

ननु गवात्मनाऽश्वाभावोऽप्यत्यन्ताभाव एव, निरवधित्वात्। तदपार्थकं संसर्गप्रतियोगित्वम्। यथा एक एव ध्वंसो भावाभावनिषेधात्मा न भिद्यते तथात्रापि न्यायस्य तुल्यत्वात्। तत्कुतोऽभावस्य चातुर्विध्यमिति चेत्। न। अन्योन्याभावस्य निषेध्यसमानदेशकालत्वात्। अस्य तु तदभावात्। अर्धरक्ते समानदेशकालत्वं भावाभावयोरिति तस्यापि पञ्चमाभावत्वम्। अस्य वा वैधर्म्यस्याप्रयोजकत्वेऽभावत्रैविध्यमिति चेत्। न। तत्रावच्छेदकस्य[2] सत्वात्। अवच्छेदकस्य भावैकनियमेन न भेदो, नियमेन पुनः समानदेशत्वम्, अवच्छेदकान्तरोपादाने त्वनवस्थितिरिति चेन्न। युगपद्भावाभावयोरप्रतीतिरेव। एकस्य देशकालपुरुषभेदेन उपलम्भानुपलम्भयोरसिद्धेः। क्रमेण प्रतीतिरुपाधिभेदसाहित्येनैव। उपाधिभेदसाहित्यमन्तरेण चैकत्र भावाभावौ विरुद्धाविति सर्वत्र दृष्टम्। अत्र तु तदभावादविरुद्धौ भविष्यतः। तादात्म्यप्रतियोगिकोऽन्योन्याभावः। तदसिद्धम्। तत्र मानाभावात्। भिन्नबुद्धिरितिचेत् न। तदभावेऽपि घटतदभावयोर्भिन्नबुद्धिदर्शनात्। तत्र स्वरूपालम्बनमिति चेत्। न। भावेष्वपि तुल्यत्वात्। आरोप्यते तत्राभाव इति चेत्। न। अभावस्यारोपितत्वे तत्प्रतियोगिनो भावस्य सत्तापत्तेः। उभयनिषेधे च विरोधापत्तेरिति चेत्। मैवम्। अतिरेकिणोऽनवस्थानदूषितत्वात्। नास्तीतिबुद्धेरारोपिताभावालम्बनत्वात् आरोपितान्योन्याभावसंसर्गनिषेधव्यवहारस्य घटतदभावाभ्यामेव करणात्। संबन्धवत्। यथा संबन्धस्वरूपमेव संबन्धारोपा-

१ °दित्युत्त°। २ °च्छेदभेदस्य स°।

त्संबन्धमवभासते संबन्धान्तरारोपेऽपि स्वरूपमेव नियामकं तथात्राप्यविरोध इति सिद्धं चातुर्विध्यम् । **इति अभावः ॥**

तत्र दुःखात्यन्ताभावोऽपवर्गः । ननु अद्वैततत्वसाक्षात्कारात् अविद्योपनीतप्रपञ्चप्रत्ययबाधे जागराद्यप्रत्ययात् स्वप्रत्ययवदद्वैतानन्दसाक्षात्कारो मुक्तिरिति मन्यन्ते । मैवम् । मानाभावात् । श्रुतिरत्र मानमिति चेन्न । बाधितत्वात् । ब्रह्मसंवेदनेऽपि प्रपञ्चप्रत्ययस्य सत्वात् । ब्रह्मसंवेदनमिदानीं नास्तीति चेत् । न । नहि वेदनान्तरवेद्यं ब्रह्म । न च ब्रह्मरूपमिदानीं नास्तीति श्रुतिवाक्यजो विशिष्टब्रह्मानुभवो नास्तीति चेत् । न । तस्याप्यनुभवरूपस्य ब्रह्मरूपानतिरेकात् । ब्रह्मणोऽभिन्नत्वेन कल्पितोऽनुभवो नास्तीति चेत् । न । कल्पितस्यासत्वेन कल्पनात्वेन वा अबाधकत्वात् । अद्वैतश्रुतेश्च द्वैतावभासिप्रत्यक्षविरोधेन ग्रावप्लवनश्रुतिवदुपचरितार्थत्वात् । अध्यक्षमविद्यात्वेन न तस्या बाधकमिति चेत् । तुल्यं प्लवनेऽपि । किं चास्याऽविद्यात्वम् । अद्वैतानुभवविरोधित्वमिति चेत् । न । द्वैतानुभवविरोधित्वेन तस्यैव किं नाविद्यात्वम् । अयत्नसिद्धत्वमिति चेत् । न । यत्नसिद्धस्यापि शोकातुरतनयसाक्षात्कारस्याविद्यात्वात् । अयत्नसिद्धस्य च तनयसाक्षात्कारस्य विद्यात्वदर्शनात् । विचारासहत्वमविद्यात्वमिति चेत् । न । अनुभवेन विरोधिना विचारस्यैव कृशानोरनुष्णत्वानुमानवदाभासीकृतत्वात् ।

जीवानामविद्यादिसमस्तोपाधिनाशे चिदानन्दब्रह्मरूपत्वापत्तिर्मुक्तिरित्यन्ये । न । जीवानां दुःखादिवत् ज्ञानात् सुखाच्च[1] भेदेन प्रतीयमानत्वात् । अन्यथा दुःखरूपत्वस्यापि प्रसङ्गात् । दुःखमहमिति नानुभव इति चेत् । नाहं सुखमिति तुल्यम् । सकलदुःखरहितत्वं सुखत्वमिति चेत् । न । अशेषसुखरहितत्वं दुःखमित्यत्रापि तुल्यत्वात् । वस्तूनां परप्रकाशत्वनियमेन ज्ञातुः स्वप्रकाशनविरोधात् । अन्यथा दुःखादेरपि स्वप्रकाशतापत्तिः । चिद्रूपोऽहमित्यनुभवोऽस्तीति चेत् । न । ज्ञानाधारस्य चिच्छब्देनाभिधानात् ।

नित्यसुखाभिव्यक्तिर्मुक्तिरित्यपरे । तन्न । सुखस्याभिव्यक्तेश्च नित्यत्वे

१ °त् । दुःखाच्चभे° ।

असंसारप्रसंगात् । तयोः संबन्ध उत्पाद्यत[1] इति चेत् । न। भावस्योत्पत्तिमतो विनाशित्वेन मुक्तस्यापि सुखासंवेदनप्राप्तेः । संसारिसुखस्यापि तथात्वापत्तेः । सुखतज्ज्ञानयोरुत्पन्नयोर्ध्वंसवदविनाशित्वमिति चेत् । न । भावस्योत्पत्तिमतो विनाशित्वनियमात् । तयोरेव प्रवाहनित्यत्वमिति[2] चेत् । न । तद्वदेव देहादेरपि प्रवाहनियमस्वीकारप्रसंगात् । सुखस्य देहभोग्यत्वनियमात्[3] । अन्यथा स्वर्गेऽपि देहविरहापत्तेः । न चात्र प्रमाणमस्ति । आनन्दं ब्रह्मणो रूपं, तच्च मोक्षेऽपि व्यज्यत इति चेत् । न । योगजधर्माविर्भूतकल्पकोटिशतानुभवनीयासंख्यसुखप्रतिपादनपरत्वेनाप्युपपत्तेः ॥

ननु दुःखाभावोऽपि मुक्तिर्न युज्यते। स हि न तावद्दुःखप्रागभावः । अनादित्वेन तस्यासाध्यत्वात् । दुःखस्य चानागतस्योत्पत्तिप्राप्तेः । नापि दुःखप्रध्वंसः। तस्य स्वतःसिद्धत्वात् । समस्तदुःखध्वंस इति चेत् । न। उत्पन्नदुःखसाकल्ये स्वतःसिद्धत्वात् । उत्पन्नानुत्पन्नसाकल्ये विरोधात् । विद्यमानसकलदुःखसाधनध्वंसो मुक्तिरिति चेत् । न । दत्तफलानां निवृत्तैरयत्नसिद्धत्वात् । अदत्तफलानां तु अनागतानर्थानुत्पत्तिमनभिसंधाय निवृत्तेरसमीहितत्वात् । न हि निदाननिवृत्तिः स्वभावतः साध्या । क्लेशनाशेतरत्वात् । अनागतानुत्पत्तेश्च स्वतः साध्यताविरोधात् । तच्चानर्थजातं मुमुक्षुसमवेतमन्यसमवेतं वा । नाद्यः । तथा सति दुःखस्यावश्यं तत्रोत्पत्तावदत्तफलताविरोधात् । नेतरः । परदुःखनिवृत्तेः स्वात्मनि सिद्धत्वात् । दुःखान्नियतपूर्वभावित्वस्य तद्धेतुत्वस्य प्रमाणादवगमे दुःखस्य स्वात्मन्यवश्यमुत्पादात्। अनुत्पत्तौ दुःखहेतुताग्राहकमानस्याभासतापत्तेः । नापि दुःखात्यन्ताभावः । तस्येदानीं सत्वे सिद्धस्य साध्यताविरोधात् । असत्वे दुःखाभावस्य स्वतो निर्वर्त्यत्वे अत्यन्ताभावत्वव्याकोपात् । अत्यन्ताभावसंबन्धः साध्यते इति चेन्न । उत्पत्त्याद्यसंबन्ध्य[4]निवृत्तौ मुक्तस्यापि संसारित्वापत्तेः । परात्मवृत्तिदुःखात्यन्ताभावस्य स्वतः सिद्धत्वात् , मुमुक्षुसमवेतदुःखात्यन्ताभावस्य च प्राक्प्रध्वंसयोरन्यतरत्रान्तर्भावात् । येषां चात्यन्ताभावो दुःखानां तेषामध्यक्षानुमानागमप्रभवस्मृत्यगोचराणामभावनिरूपकतानुपपत्तिश्च । यावदनागतदुःखप्रागभावानुवृत्तिः क्रियत

१ °उत्पद्येत° । २ °निमित्तत्वमि° । ३ °देहिभो° । ४ ° बन्धनि° ।

इति चेन्न । प्रागभावस्य भावो वा दुःखनिवृत्तिः, तस्यानागतकतिपयसमयसंबन्धो वा यावदनागतसमयसंबन्धो वा । नाद्यः । अनादित्वात् । न द्वितीयः । दुःखस्य पुनरुत्पत्तिप्रसंगात् । न तृतीयः । प्रागभावत्वविरोधात् । विनाशिनश्चानन्तकालसंबन्धित्वविरोधात् । अविनाशिनः स्वतः सिद्धत्वादिति । अत्रोच्यते । क्रमेण दुःखोत्पादो हि संसारित्वम् । यदा तु युगपदशेषक्लेशभोगोपायकायव्यूहादिनिवर्तकयोगाभ्यासप्रसादसमासादितात्मतत्वसाक्षात्कारस्य कारणाभावाद्धीनक्लेशस्य युगपदुपभुक्तसमस्तदुःखनिवृत्तिः तदा सैव मुक्तिरशेषदुःखनिवृत्तिरूपा पुरुषार्थो भविष्यति । दुःखजातीयात्यन्ताभावस्य वा स्वात्मनि साध्यत्वात् । अशेषक्लेशहेतुनाशस्य चात्यन्ताभावात्मसंबद्धस्वभावत्वात् । तदुत्पत्तौ दुःखाभावस्य तदीयत्वेन व्यवहारात् । तदीयव्यवहारार्पकत्वेन विषयविषयिभावादिवदस्यापि संबन्धव्यवहारगोचरत्वात् । ध्वंसस्वभावत्वेन कृतकस्याप्यविनाशित्वोपपत्तेः । न तावदत्र फलानां प्रमाणतः साधनत्वनिश्चयविरोधः । सतां सहकारिसाहित्ये दुःखजनकत्वस्य तत्साधनतारूपत्वात् । एषां च ध्वस्तत्वेन फलानुत्पादकत्वात् । प्रायश्चित्तप्रतिहतदुरितवत् । न चात्यन्ताभावप्रतिपक्षनिरूपणं शङ्कितदुःखपरिहारवन्मुमुक्षुसमवेतदुःखमात्रस्य संभावनोपनीतत्वात् । असति योगाभ्यासे अवश्यं दुरितप्रवाहस्य अनागतसमयवर्तिदुःखोत्पादकत्वात् । सर्वत्र चात्यन्ताभावनिरूपणे सामान्यतोऽवगतस्य विशेषतः समारोपितज्ञानविषयस्य प्रतियोगित्वदर्शनात् । विशेषतस्तु निश्चयापेक्षया अत्यन्ताभावरूपनिरूपणविरोधित्वात् । शशविषाणं तदीयमन्यदीयं वा नास्तीति दूषणस्य सुवचत्वात् । प्रागभावस्यासाध्यत्वेऽपि विनाशकहेतुसंनिधौ विनाशोपलम्भात् । अविनाशित्वसमीहया नाशकहेतुनिवृत्तये प्रवर्तन्ते, यथा प्रायश्चित्तविधौ दुःखाभावनाशकदुरितसंपत्तौ दुरितनिवृत्तये । अभावस्य नित्यत्वे स्वत एव नाशकनिवृत्तिराकाशादिवत् । अनित्यत्वे त्वशक्यतेति चेत् । न । गगनवत्स्वरसतो नाशविरोधात् । दुःखाभावस्य तु नाशकोपलब्धौ स्वभावविरोधाभावात् कारणनिवृत्ति[1]मुखलभ्यत्वात् । घटाभावस्य नित्यत्वे घटहेतुतोऽप्यशक्या घटोत्पत्तिः । अनित्यत्वे

---

१ °त्तिमुपल° ।

तु घटहेतुं विनैव भविष्यतीति पूर्वपक्षतुल्यतापत्तेश्च । इयमेव हि प्रागभावानुवृत्तिरिति प्रावादुकप्रवादः । न चास्य समयव्ययफलत्वेनापुरुषार्थत्वं दुःखस्य प्राचुर्यात्सुखस्याल्पत्वात् । आनन्त्यात्सुखदुःखयोरिदमनुपपन्नमिति चेत् । न । दिनमासवर्षावच्छेदेन दुःखप्राचुर्यनिश्चयेऽत्रापि तदनुमानात् । तदनाकलितसंख्यात्वमेतयोरानन्त्यं, न तु न्यूनातिरेकभावाभावः । अन्यथा सुकृतदुष्कृतयोरानन्त्ये विशेषाभावादपूर्वकर्माननुष्ठानप्रसंगे वैदिकविधिनिषेधवैयर्थ्यापत्तेः । जीवनिर्वाणदशायां वा योगजधर्मसाहित्येनैवैहिकामुष्मिकसकलसुखोत्कृष्टयावदिच्छोपभोग्यसुखप्रवाहोत्पत्तौ सुखोपभोगसमीहानिरासे योगजादृष्टविनाशात् परमनिर्वाणस्य सकलदुःखाभावस्योत्पत्तौ समव्ययफलत्वाभावात् । एवं च न प्रावादुकप्रवादावकाशः । जीवन्मुक्तिसहितायाः परममुक्तेः पुरुषार्थत्वात् । न च जीवतः सुखोपभोगोऽनुपपन्नो, ज्ञानेनैव कर्मणां क्षयादिति वाच्यम् । अकृतप्रायश्चित्तानां कर्मणां देहारम्भककर्मवद्भोगैकनाश्यत्वनियमात् । न चानन्त्यात्कर्मणां भोगक्षयानुपपत्तिः । योगर्द्धिसामर्थ्येनानन्ततदुपभोगजनककायनिर्माणोपपत्तेः । न च विषमविपाकसमयतया कर्मणां युगपदुपभोगविरोधः । तदनुकूलसहकारिसाकल्यस्यैकदोत्पादनादेव समानविपाकसमयतोपपत्तेः । भवति चात्र स्मृतिः "नाभुक्तं क्षीयते कर्म" इति, श्रुतिश्च "तावदेवास्य चिरम्" इति । न चात्र "ज्ञानाग्निः सर्वकर्माणि" इति प्रतिस्मृतिविरोधः । भस्मसात्करणेन विनश्वरताया उपलक्षितत्वात् । तस्य तत्फलसंपादकदेहव्यूहेनाप्युपपत्तेः । स्वर्गवत् श्रुतिसिद्धे चापवर्गेऽनुमानमप्युच्यते । आत्मा कदाचिद्ध्वस्ताशेषविशेषगुणो विभुत्वे सति कार्यविशेषगुणवत्त्वात्, महाप्रलयावस्थायामाकाशवत् । न च क्रमेण सर्वमुक्तिः । केषांचिदात्मनां संसार्यैकस्वभावत्वात् । न चैवं सति तत्वशङ्कायां सर्वेषां मोक्षाननुष्ठानप्रसंगः । शमदमभोगानभिष्वङ्गादिचिह्नेन श्रुतिसिद्धेन संदेहनिवृत्तेः । **इति मुक्तिः** ॥

न्यायः परार्थानुमानम् । स च प्रतिज्ञादिपञ्चावयवात्मा । न च प्रतिज्ञादीनामसाधनाङ्गत्वम् । अन्येन बुभुत्सितसाध्यप्रतिपादनोपयोगित्वात्[1] ।

---

१ °नोपयुक्तत्वा° ।

न चोपनयनिगमनाभ्यामेव तदधिगतम् । तयोरुचितसमयातिक्रमात् यथापेक्षितं वाच्यमिति नियमः । एवं यदा यस्येत्यपि नियम एव । अन्यथा पूर्वनियमस्यैव भङ्गात् । तथा च प्रतिज्ञार्थ एव पूर्वमपेक्षित इति प्रतिपाद्यः । अन्यथानिग्रहात् । न च गङ्गायां घोषः पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादिवाक्यवत् सदित्यप्रतीतावपि न दोष इति वाच्यम् । वादिनः संदिग्धाप्तत्वात् । अन्यथा विपरीतत्वेऽपि दृष्टान्ताभासानुपपत्तेः । अत एव हेतुपदमपि साध्यस्वरूपमात्रवत् साधनस्वरूपमात्रस्य । तद्धेतुतामात्रेण तदनन्तरं जिज्ञासितत्वात् । आभ्यां हेतुहेतुमद्भावप्रतीतौ धर्मधर्मिभावबोधनार्थमुपनयोऽपि । तस्मादनित्य एव न त्वन्यस्मान्नित्योऽपीति विपक्षशङ्कानिरासार्थं निगमनमपीत्यास्ताम् । इति पञ्चावयवाः ॥

तदाभासाश्चत्वारः ॥ असिद्धविरुद्धसव्यभिचारानध्यवसिताः । बाधप्रतिरोधावपि स्त इति चेत् । न । तयोर्व्याप्तिपक्षधर्मतापहारेणैवानुमानदूषकत्वात् । सिद्धसाधनवत् । अन्यथा तस्यापि दूषणान्तरतापत्तेः । ताद्रूप्यपरिच्छेदो न तस्य विरोधिस्वभावादिति तस्य परापेक्षित्वात् । बाधप्रतिरोधयोस्तु साध्याभावपरिच्छित्तिरूपत्वादाभासान्तरत्वमिति चेत् । न । सर्वोपसंहारप्रवृत्तबाह्याभ्यन्तरनियमस्यानुमानसहायत्वात् । तदेकदेशप्रवृत्तविपरीतपरिच्छेदस्यैव बाधस्य सव्यभिचारत्वात् । स च व्यभिचारो बहिरन्तश्चेति व्यभिचारदेहान्तर्भूतत्वात् । प्रतिरोधे च प्रतिरोध्यनियमग्राहकप्रत्यक्षबाधस्य सत्त्वे तस्यानुद्भावनात् । तस्याप्येतन्नियमग्राहकं विपक्षान्तरमस्तीति चेत् । न । अस्यैव प्रतिबन्ध्य[1]सिद्धिरूपत्वात् । अलं तदुपजीविनाऽन्येनेति तयोरसत्वात् ॥

लिङ्गत्वेनानिश्चितो हेतुरसिद्धः । स एवैकोऽस्तु, अन्येषामत्रैवान्तर्भावादिति चेन्न । व्याप्यत्वासिद्धत्वादेरन्यत्र व्यभिचाराद्युपजीवकत्वात् । ननु नियमनिश्चयप्रागभावस्यात्यन्ताभावस्य वा हेतुकत्वेनोत्पत्तावनपेक्षितत्वात् ज्ञप्तेरपि मानसप्रत्यक्षाधीनत्वात् न प्रतिबन्धासिद्धेर्व्यभिचारोपजीवकत्वमिति

१ °बन्धासि° ।

चेत् । न । व्यभिचारिषु प्रतिबन्धानुपलम्भस्य प्रतिबन्ध्यभावहेतुकत्वात् । कारणाभावात्कार्याभावस्य सर्वमतसिद्धत्वादुपजीवकत्वस्थितिरिति ।

ननु व्याप्यत्वानुपलम्भस्य तन्निश्चायकत्वेन विपरीतापत्तिः । नह्यत्र योग्यानुपलम्भं विनाऽभावावगतिरिति चेत् । मैवम् । स्वार्थानुमाने यदेव स्फुरति तदेव दूषणमित्युपजीव्योपजीवकभावाविचारात् । परार्थानुमाने तु व्यभिचारिणि न व्याप्त्यसिद्धिः । दृष्टान्ते सर्वोपसंहारात्तदुपलम्भात् । उपाध्यभावेन व्यभिचारशङ्का हानावतिपीड्या पुनरनुत्तरव्यभिचारस्योद्भावनात् । तस्यैव तदुपजीवकत्वात् । प्रयासगौरवाच्च । विरुद्धे तु विपरीतप्रतिबन्धे वाक्यस्थे परिस्फुरति अन्येषामनन्तरङ्गत्वमेवोपजीवकत्वम् । असिद्धौ त्वनुपलम्भस्यैवासत्त्वनिर्वाहकत्वेनोपजीव्यत्वम् । एवं सति सोपाधित्वमेव दूषणं स्यादिति चेन्न । तस्य स्वतोऽदूषणत्वात् । ताद्रूप्यपरिच्छेदवत् । तेन व्याप्त्यसिद्ध्युपजीवनात् । व्याप्त्यनुपलम्भस्य तु कारणाभावत्वेन स्वरूपदोषत्वात् । अत एव व्यभिचारसंदेहस्य विपक्षव्यावृत्त्यपरिच्छेदोपजीवित्वेन संदिग्धानैकान्तोऽपि न पृथक् दूषणम् । पक्षैकदेशवृत्तिरनध्यवसितः । न चात्र प्रतिबन्धासिद्धिः । व्यभिचारवद्व्यतिरेकसाहचर्याप्रतीतिनियममदर्शयति तदनुद्भावनात् । न च व्यभिचार एव, सपक्षविपक्षयोरप्रतीतेरनध्यवसायहेतुत्वेन शबलदूषणतया विलम्बितप्रतीतिकस्य व्यभिचारस्यानुद्भावनात् ॥ इति हेत्वाभासाः ॥

स्मृतिरपि मानान्तरमेव । अर्थनिश्चयहेतुत्वात् । अनुभवपारतन्त्र्यान्नैवमिति चेत् । न । उत्पत्तिपारतन्त्र्यस्य प्रमाणान्तरसाम्यात् । फलाभावेन ज्ञप्तिपारतन्त्र्याभावात् । इच्छावद्विषये परापेक्षायां ज्ञानत्वव्याघातः । अनधिकपरिच्छेदस्य गृहीतानुभवसाधारण्यात् । कारणज्ञानप्रामाण्यापेक्षया यथार्थत्वस्यानुमितिसाधारण्यात् । स्वविषयज्ञानप्रामाण्यापेक्षत्वस्य शब्दसाधारण्यात् । अधिकपरिच्छेदे च प्रमाणत्वात् । अन्यथा तद्व्यवस्थानुपपत्तेः । तत्रावच्छिन्नं हि स्मृतिरर्थमाकलयति । सा च यदि पूर्वानुभवस्यापि गोचरः,

१ °बन्धाभा° । २ °चारत्वात्° । ३ °नातुरस्यैव तदु° । ४ °त् । आयासे गौ° । ५ °न स्वत एव दो° । ६ °यमादर्शयति° ।

तदा तत्रापि तदित्युल्लेखः स्यात् । न च क्वचिदिदमिति स्यात् । न चेत् स्मृतिरेव तत्रानपेक्षेति मानम् ।

तत्ता च न ज्ञातता । ज्ञातोऽयं सोऽयमित्यनयोरविशिष्टविषयतापत्तेः । नाप्यतिवृत्तानुभवविशिष्टता । तस्याः पूर्वानुभवेनानुल्लेखात् । स्मृतिबलादेव तत्कल्पनमिति चेत् । न । अननुभूत एव स्मृतिस्तत्तांश इति तत्कल्पनापत्तेः । नापि पूर्वकालविशिष्टता, पूर्वमासीदयमित्यत्रापि प्राप्तेः । घटमात्रावसायिनी स्मृतिरनुमिततत्तायां स इत्यभिलापश्चेति चेत् । न । तं घटमहं स्मरामीत्यनुव्यवसायानुपपत्तेः । प्रमाव्यवहाराभावादप्रमात्वमिति चेत् । न । लौकिकानां साधूनां सत्यज्ञान एव प्रमाव्यवहारदर्शनात् । स्मृतिर्हि पूर्ववर्तमानकालावच्छिन्नमर्थमाकलयति । न च तदिदानीं तादृशमिति श्यामे रक्तताप्रतीतिवदयथार्थेति चेत् । न । तस्य तत्कालावच्छिन्नं तदानीमसत्वापत्तेः । नापीदानीं तदवच्छेदमाकलयति । अनवभासात्तस्येदानीं कालस्य पूर्वानुभवेन स्मरणायोगात् । मुनीनामव्यवहारादिति चेत् । न । वादिनं प्रति मुनित्वस्यैवासिद्धिरिति तत्कथमेव प्रमाणमिति चेत् । अत्रोच्यते । न ह्यत्र सत्यज्ञानत्वं सत्यानुभवत्वं वा प्रामाण्यं साध्यम् । यथाक्रमं सिद्धसाधनबाधयोः सत्वात् । नापि प्रमाणशब्दवाच्यत्वम् । अनीश्वरेच्छाप्रयुक्तप्रमाणशब्दाभिधेयत्वे सिद्धसाधनात् । ईश्वरेच्छापरतन्त्रप्रमाणशब्दवाच्यत्वस्य तदभियुक्तपुरुषव्यवहारगम्यत्वात् । प्रमाणाभियुक्तानां चाक्षचरणकणभक्षादीनां स्मृतौ प्रमाणव्यवहाराभावात् इन्द्रपाणिनिप्रभृतिव्यवहारात् वाचकतानियमवत् पूर्वानुभवापेक्षितयैव वा विषयप्रतिनियमात् । इच्छादिवत् । न चैवमज्ञानत्वापत्तिः । अर्थस्वभावप्रत्यासत्तेरविरोधात् । न हि ज्ञानस्यार्थेन प्रत्यासत्त्यन्तरमस्ति । न चेच्छाया अपि ज्ञानत्वम् । इच्छात्वस्यानुभवसिद्धत्वेन विषयप्रवणताया ज्ञानत्वव्यभिचारात् । न चैवमध्यक्षादौ । अध्यक्षस्येन्द्रियसन्निधानाद्विषयत्वनिश्चयात् । लिङ्गस्य स्वविषयप्रतिबन्धेन वाक्यस्याकाङ्क्षायोग्यतादिना आभासस्यापि दोषहेतुत्वादिति । तत्ता चातीतज्ञानवैशिष्ट्यमतीतसमयावच्छेदो वा । स चानुभवोत्तरकालमवभासत एव । नच तदित्यु-

१ °नां प्रामाणिकानां च स° । २ °नियमात्° ।

ल्लेखः । सर्वपर्यायावच्छेदस्य नियमेनानाकलनात् । अनुभूतदिवसादिरूपकालभेदो वा स्मृतिगोचरः । तस्य तु वृत्ततामिदानीमन्यतोऽनुसंधाय तदिति तद्वाचकोल्लेखो व्यवहार इति । **इति स्मृतिः ॥**

आर्षं च ज्ञानं ऋषीणाम्, कन्यायाश्च यथा श्वो मे भ्राता आगन्तेति । न चैतदध्यक्षं । कारणाभावात् । न च मनस्तथा । तस्य बहिरप्रवृत्तेः । अनुमानविलयाच्च । न चैतन्नयनस्पन्दादिलिङ्गकम् । तेषां व्यभिचारात् । न च धूमादिवदवान्तरजातिभेदावलम्बनम् । तदप्रतिसंधानेऽपि जायमानत्वात् । न चैतत्संभावनात्मकम् । कोटिद्वयानुल्लेखात् । न च भूयःसहचरितधर्मदर्शनजन्मैव न्यूनैककोटिः संशयः । आगमिष्यत्येवेति निश्चयाकारेण जायमानत्वात् । अनुमानवत् । अन्यथा तस्याप्येवंविधसंशयतापत्तेः । यथा वा स्वेच्छास्मृतपदार्थसार्थे भवति **शालिवाहनो** नृपतिरिदानीं शृङ्गारसरसीतीरे देव्या लीलावत्या सह ललितमधुरं संगीतकमनुतिष्ठतीति ज्ञानं । न चैष विपर्ययः । संवादात् । नन्विदमपरोक्षत्वेऽध्यक्षमन्यथानुमानमिति चेन्न । परोक्षत्वेऽपि लिङ्गानपेक्षत्वात् । लिङ्गानपेक्षमपि अनुमानमिन्द्रियानपेक्षपारमेश्वरप्रत्यक्षवदिति चेन्न । अपरोक्षत्वस्य प्रत्यक्षत्वात् । नतु परोक्षत्वमनुमानत्वम् । शब्दादेरुच्छेदापत्तेः । अपरोक्षमेव चार्षज्ञानम् । न तु प्रत्यक्षम् । अनिन्द्रियकरणकत्वात् । न चेश्वरज्ञानस्य प्रत्यक्षप्रमात्वविरोधः । प्रत्यक्षप्रमातुल्यतयाऽपरोक्षत्वेन तत्र प्रत्यक्षव्यवहारात् । आर्षेऽपि तत एव प्रत्यक्षव्यवहारापत्तिरिति चेत् । न सतो ह्युपचारस्य निमित्तकल्पनं नतूपचारनिमित्ते सति सर्वत्रोपचारप्रवृत्तिः । आर्षस्य प्रमाणान्तरत्वे प्रत्यक्षानुमाने एव प्रमाणमिति त्ववधारणं लौकिकप्रमाणापेक्षयेति सर्वं सुस्थम् । **इत्यार्षम् ॥ इति बुद्धिः ॥**

ननु गुरुत्वं न तावत्प्रत्यक्षं । ऊर्ध्वदेशकरस्पर्शेनाग्रहात् । अधोदेशस्य स्पर्शात्तद्ग्रहणमिति चेन्न । अवनतिं प्रत्यहेतूनां तृणादीनां अधःस्पर्शेऽपि गुरुत्वाग्रहात् । स्पर्शव्यतिरिक्तस्य च स्पर्शनेन्द्रियप्रत्यक्षगुणस्य चाक्षुषताप्रत्यक्षतानियमोपलब्धेश्च । स्पर्शनेन्द्रियग्राह्यस्य चोर्ध्वानूर्ध्वस्पर्शप्रत्यक्षतानियमानुपलब्धेः । अस्तु तर्हि पतनानुमेयमिति चेन्न । अदृष्टवत्क्षेत्रज्ञसंयोगादेरपतनोपपत्तेः । अदृष्टहेतुकत्वे पतननियमो न स्यादिति चेत् । न । दहनोर्ध्वज्वलन-

वदुपपत्तेः । अन्यथा तत्राप्युद्गमनहेतोर्लघुत्वस्य कल्पनापत्तेः । अदृष्टहेतुकत्वे उर्ध्वज्वलनवद्यावदाश्रयं पतनमनुवर्तेतेति चेन्न । अदृष्टहेतुकत्वेऽपि परमाणुकर्मणां यावदाश्रयमननुवृत्तेः ।

नन्वदृष्टवदात्मसंयोगस्य पतनहेतुत्वे गुरुत्वतारतम्याभावात् । पतने चिरक्षिप्रतारतम्यविरोधात् । न चातिरिक्तक्षित्यादिप्रवेशात्तदिति वाच्यम् । तेजःप्रवेशेऽपि प्रसंगात् । तेजो न गुर्विति चेत् । तुल्यम् । क्षित्यादौ गुरुत्वास्वीकारात् । पतनानुकूलवेगतारतम्येनैव पतनतारतम्यसंतानस्य चिरक्षिप्रतोपपत्तेः । तथाभूतवेगजनकपतनोत्पत्तौ तर्हि किं कारणम् । अदृष्टवदात्मसंयोगो विशिष्टवेगोत्पादकपवनचलनकर्मवत् । अथ भूगतकर्मविशेषोत्पत्तिरदृष्टेतरकारणविशेषजन्या शरीरादिषु दृष्टेति चेन्न । पवनगतवेगार्पककर्मविशेषोत्पत्तिरदृष्टेतरकारणापेक्षैव दृष्टा पुरुषप्रेरितप्राणादिकर्मवत् । ततः पुरुषप्रयत्नानपेक्षपवनादिकर्मोत्पत्तावपि गुरुत्ववल्लघुत्वमतीन्द्रियं कल्पनीयम् । रस एव गुरुत्वमस्त्विति चेत् । न । एवं सति रसनया माधुर्यानुभववद्गुरुत्वानुभवप्रसंगात् । रसस्यावनतिहेतुत्वात् गुरुत्वस्वभावत्वमिति चेत् । न । रसो न पतनासमवायिकारणं बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपवत् । अन्यथा वेगप्रकर्षोद्गतितारतम्यवन्माधुर्यप्रकर्षाद्द्राक्षादिचूर्णेषु पतनप्रकर्षप्रसंगात् । गुरुत्वाविशेषेऽपि पाषाणालाबुप्रभृतिषु मज्जनोन्मज्जननियमवददृष्टहेतुकतासाम्येऽपि पतनोत्पतननियमो भविष्यतीति चेत् । न । जलाधोगमनाद्धि मज्जनं । जलेन धारणं पतनप्रतिबन्धादुन्मज्जनम् । एतच्च जलसंयोगस्य कस्यचिदेव पतनप्रतिबन्धे[1] हेतुत्वात् । दृष्टहेतुकमेव मज्जनमुन्मज्जनं चेति चेत् । अत्रोच्यते । विवादाध्यासितं पतनं स्वसमवायिकारणमात्रसमवेतासमवायिकारणजन्यं पतनत्वात् । वेगार्जितशरपतनवत् । न च तेजोऽधोगमनेन व्यभिचारः । तस्य कारणगतवेगपूर्वकतेजोगतवेगजन्यत्वात् । न च तेजःपरमाणोरधोगमनेन व्यभिचारः । तस्यापि बीजाङ्कुरवदनादिकर्मजवेगजनितत्वात् । रसवद्द्रव्यसमवेताधोगमनं वा पतनम् । यदि वा गुरुत्वस्य कचिददृष्टापेक्षत्वगिन्द्रियव्यञ्जनीयत्वेनान्यत्रानुमानप्रवृत्तेः । न चैवं गुरुत्वस्याती-

१ °बन्धसामर्थ्यात्° ।

न्द्रियत्वव्याघातः। अतीन्द्रियेष्वपि परमाण्वादिवदात्मविशेषगुणापेक्षित्वेन इन्द्रियप्रवृत्तिदर्शनात्। न चेदेवं पृष्ठाद्यारोपितपदार्थस्य गुरुत्वानुपलम्भप्रसंगः। पतनाभावेनानुमानाभावात्। न चेन्द्रियसंनिकर्षव्यङ्ग्यं गुरुत्वं, ऊर्ध्वस्पर्शेनानुपलम्भात्। न चाधःस्पर्शवेद्यं, तृणादिस्पर्शे गुरुत्वस्यानुपलब्धेः। न चोद्भूतत्वे सति इन्द्रियसंनिकर्षवेद्यं। गुरुत्वस्य बहिरिन्द्रियव्यवस्थां प्रत्यहेतुत्वेन संख्यादिवदुद्भूतत्वाभावात्। ततो योगीन्द्रियवदिन्द्रियमदृष्टसहायं अतीन्द्रियेऽपि गुरुत्वे प्रवर्तत इति। न च लघुत्वं, गुरुत्वापकर्षस्यैव लघुत्वप्रत्ययगोचरत्वात्। दहने च उद्गमननियमस्य कारणवेगपूर्वकवेगादेवोपपत्तेः। एतच्च कारणगुणपूर्वकमवयवीति।

नन्वेवं द्विपलिकरुचकाभ्यामारब्धस्य स्वस्तिकस्य कारणगुरुत्वापेक्षया न्यूनसमाधिकभावेन त्रिचतुःपञ्चपलिकत्वापत्तिरिति चेत्। न। खण्डावयविनां स्वस्तिकारम्भकत्वात्। ननु तत्तदवयवपरंपरायाः परमाण्ववसानायाः तत्तत्पलरूपं गुरुत्वं कारणाकारणसमाहारस्य। तत्र कारणगुरुत्वस्यापरिचयात्। समहीनाधिकभावेऽप्यविरोधात्। तथाप्यवनतिभेदः स्यादिति चेन्न। भूयसि गुरुत्वेऽल्पगुरुत्वोत्कर्षेऽप्यवनतिभेदस्याभावात्॥ इति गुरुत्वम्॥

द्रवत्वं स्वाभाविकमन्यथा च। पूर्वमप्सु, अन्यत्क्षितितेजसोः करकाद्रवत्वं न स्वाभाविकमिति चेत्। न। घृतादिवत्तस्य नैमित्तिकविलयताभावात्। उत्तरं च कनके। पार्थिवमेव तत्किं न स्यादिति चेन्न। तेजोद्रवत्ववद्रूपित्वात्। क्षितिवत्। ततः पक्षधर्मतया करक एव सिद्ध्यतीति नियमात्। कनकतैजसत्वे का प्रमेति चेत्। न। क्षित्युदकान्यत्वे सति रूपित्वाद्दीपवत्। कनकं न भौमं अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात्। जलपरमाणुवत्। गुरुत्वमप्येवमभौमं स्यात्। अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानत्वादिति चेत्। न। गुरुत्वस्य भौमस्य स्वाश्रयसजातीयव्यापकत्वनियमात्। तेजोमात्रे गुरुत्वप्रसंगात्। भौमस्यापि गुरुत्वस्याध्यासादेरत्यन्तानलसंयोगेऽप्यनुच्छेदात्। सुवर्णं चाद्रुततैजसं अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वात्। न यदेवं न तदेवम्, यथा क्षित्यादिकं। भौममपि द्रवत्वं स्नेहवदौपाधिकं स्यादिति चेत्। न। काचादिषु द्रवत्वेऽपि संग्रहा-

भावात् । आप्यत्वे तु संग्रहप्राप्तेः । द्रवत्वं विहाय स्नेह एव स्यन्दननिदानमस्त्विति चेन्न । तदुत्कर्षेऽप्यनुत्कर्षात् । नहि घनीभूतघृतादिकमपेक्ष्य चिरस्यन्दि जलं । जलापेक्षया चाशीघ्रस्यन्दि घृतम् ।। इति द्रवत्वम् ।

स्नेहो माहिषगव्यादिषु दधित्ववत् घृतादिषु जातिभेद एवास्तामिति चेत् । न । तस्यैकसंबन्ध्यपेक्षया संबन्ध्यन्तरे सोत्कर्षत्वात् । उत्कर्षस्य च सामान्यात्मकतया सामान्येऽभावात् । संग्रहस्तर्हि कनकजलविमलीकरणवज्जातिभेदादेवास्तामिति चेत् । न । तोयत्वघृतत्वद्रवत्वादीनां व्यभिचारात् । एतदुत्कर्षापकर्षाभ्यां सोत्कर्षापकर्षत्वात् । तथापि कथमंभस्येव, धूमादावप्युपलब्धेरिति चेन्न । संयुक्तसमवायादेवोपपत्तेः । द्रवत्ववदग्रहान्नैवमिति चेत् । न । तोयव्याख्यानावसर एव परास्तत्वात् ।। इति स्नेहः ।।

ननु प्रोक्षणादिजन्यसंस्कारसंभवे संस्कारस्त्रिविध इति न सिद्ध्यति । तथा हि । "व्रीहीन्प्रोक्षती"ति द्वितीया प्रोक्षणजन्यफलाश्रयत्वं प्रतिपादयति । गृहं[1] गच्छतीतिवत् । तच्च दृष्टं नास्तीत्यतीन्द्रियः संस्कारः । एवमभिमन्त्रिता मृदादयो विषायन्ते । तत्राभिमन्त्रणजन्यः संस्कारः । तत्र देवतानां संनिधिः क्रियते इति चेन्न । देवतादिकल्पनापेक्षया संस्कारकल्पनाया लघुत्वात् । आगमप्रसिद्धसत्वानां देवतानामवश्यकल्पनेति चेत् । न । लोकान्तरवर्तित्वेन देवतानां देहसंनिधानस्याशक्यत्वात् । सार्वज्ञ्ये चेतनासंनिधेः सर्वत्र सुलभत्वात् । असार्वज्ञ्ये तु व्यवहितगोचरचेतनार्जनस्याशक्यत्वात् । विचित्रशक्तीनां विधानानां सामर्थ्ये व्यवहितमपि साक्षात्कुर्वन्तीति चेन्न । यागादावपि देवताप्रीतिरेवामुष्मिकफलमुपकल्पयतीत्यदृष्टकल्पनानुपपत्तिप्रसक्तेः । तथाच **महाव्रतः**—

"मृदमपि विषं कश्चिन्मन्त्रः करोति नियोजितः ।
सृजति तदसौ कांचिच्छक्तिं मृदोऽतिविमोहिनीम् ।।"

लाक्षारसावसिक्तबीजपूरकुसुमारुणिमा च लाक्षारसावसेकाहितसंस्कारप्रभवः । लाक्षारसावसेकादेवारुणत्वं महारजनसंपर्काद्वसन इव भविष्यतीति चेत् । न । चिरान्तरितत्वात् । तथाच **महाव्रतः**—

१ °ति ग्रामं ग° ।

"कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते।
शक्तिराधीयते तेन काचित्तां किं न पश्यसि" ॥
"किं वा सिञ्चति बीजपूरकुसुमे लाक्षारसं तत्क्षणा-
देवासौ[1] लसितो मिलिष्यति कथं पुष्पेषु दूरान्तरः।
किंचान्यत्कियतोऽपि चास्य किमसौ संभाव्यते विस्तरः
प्रत्यब्दं भवति द्रुमोऽयमरुणच्छत्रं वसन्तश्रियः" ॥

उत्तरकालं तपनकरसंपर्कमहिम्ना पाकजोऽयमरुणिमा कुसुमेष्विति चेन्न। लाक्षारसानपेक्षपाकप्रभवत्वे लाक्षारससेकवैयर्थ्यात्। तदपेक्षपाकजतायां लाक्षारसस्यातीतत्वेनाऽनुपपत्तेः। परम्परया लाक्षारसप्रसूतेषु पाकजो विशेष इति चेन्न। विचारासहत्वात्। लाक्षारसस्य बीजपूरतरुमात्रे वा जनकत्वं तद्विशेषे वा। न तावदाद्यः। तस्य तद्व्यतिरेकेऽप्युत्पादात्। न द्वितीयः। दृश्यस्य तद्विशेषस्यानुपलम्भनिरस्तत्वात्। न हि बीजपूरावयवेषु कश्चिज्जातिविशेषो बीजपूरतरौ वावभासते। अदृश्यत्वे चातीन्द्रियशक्तिस्वीकारात्। लाक्षारसावसिक्तावयवारब्धेषु तरुष्विति चेत्। न। तदवयवानां शोषात्। परमाणूनां च पार्थिवानां सर्वत्राविशेषात्। क्षीरमिश्रत्रिफलाजलावसिक्तसितापराजिताशाखाभेदे सितासितकुसुमानुपपत्तेः। साक्षात्स्वसंसर्गिणि बीजावयवभेदेऽरुणिमानमनर्पयतोऽसंसर्गिणि कुसुमे रक्तताधानमनुपपन्नम्। यदाह—

"न भिनत्ति कयापि मात्रया फलकाण्डाङ्कुरपल्लवानपि।
यदयं निहितो रसैस्[2]तथा तदनुत्पन्नमि[3]वावभासते ॥"

अत्रोच्यते। संस्कारस्य द्वयी आधारता। समवायः स्वभावप्रत्यासत्तिश्च। तत्र व्रीह्याधारता स्वभावप्रत्यासत्तिरेव स्यात्। भावनावत्। यथा तद्विषयज्ञानप्रसूतत्वमेव तदीयत्वं भावनायाः तथा तद्विषयप्रोक्षणादिप्रसूतत्वमेव तदीयत्वम्। प्रत्यासत्तिश्च तदुपरक्तप्रतीतिगम्या। सा च ज्ञात इतिवत् संस्कृत इति संभवति मुख्यसंबन्धे किं बाधकमिति चेत्। कल्पनागौर-

१ सोगणितो° २ रसं भूयात्त°। (?) ३ °नुपपन्न°

वमेव । विजातीयकल्पनायामात्मविशेषगुणस्य भूतसमवेतत्वमसंभावितमेव । संयोगफलाश्रयत्वेन वा द्वितीयाश्रुतेरुपपत्तेः । व्रीहीनितीप्सितकर्मणि द्वितीया व्रीहीणां विध्यपेक्षितफलाधिकरणत्वं प्रतिपादयति, संयोगस्य तु विध्यनपेक्षितत्वमिति चेन्न । तस्यापि विध्यपेक्षितादृष्टजननद्वारेणापेक्षितत्वात् । एतेनाभिमन्त्रणं व्याख्यातम् । कुसुमारुणिमा तु नोपादानत्वेन वाऽसमवायिकारणत्वेन वा शक्तिमाक्षिपति । किंनामातीतलाक्षारसावसेकापेक्षा नियमस्यान्यथानुपपत्तेरतीन्द्रियं द्वारमस्यापेक्षानिर्वाहकत्वमुपपादयति । स च तज्जनितरूपद्वारेणैवोपपद्यमानो नान्यत्कल्पयिष्यतीति । एतेनापराजितालताकुसुमवैचित्र्यं व्याख्यातम् । वेगासिद्धेस्तथापि त्रैविध्यमनुपपन्नम् । स हि नानुभवादेव व्यवस्थाप्यते । चिरेण गच्छतीति वत् शीघ्रकर्मक्षणोत्पादभेदालम्बनत्वात् । नच रयेण भ्रमत्यलातचक्रमित्यत्रैकप्रत्ययविषयभ्रमाभेदग्रहादनूत्पादानाकलनाद्वेगसिद्धिरिति वाच्यम् । संयोगविभागप्रबन्धोत्पादानुभावस्य प्रतीतेः । नच कर्म[1] कर्मसाध्यमिति तत्प्रतीतिः । अत्र नियमाभावात् । अन्यथा न शब्दः शब्दजनकः इति ध्वनिसंयोगविभागकल्पनापत्तेः । वेगशब्दस्य शिष्टैराशुपर्यायत्वेन स्वीकारात् । तस्य च समयभेदवाचित्वात् । न चोभयवाचित्वं गौरवात् । ततोऽभिलापभेदावभासिनी प्रतिपत्तिः समयभेदमेवाश्रयत इति प्राप्तम् । मैवम् । संतानानूत्पादस्यानाकलनेऽप्यन्तरासंभविनां वेगबुद्धिविषयत्वात् । संतानिनां क्रियासंयोगक्षणानामाशुभावस्य कालकलात्मनोऽध्यक्षाविषयत्वात् । वेगेन भ्रमतीत्यादौ गुणारोपात् । संयोगविभागातिरिक्तकर्मणि चलतीति गतिविषयतावत् वेगस्य च शरादिधर्मत्वेनावभासनात् । अन्यत्र शरीरादौ तूत्तरोत्तरकर्मजननं प्रयत्नादेव भवतीति ॥ इति संस्कारः ॥

कथं पुनः पुरुषविशेषगुणो धर्मः सिद्ध्यति । यागाद्याराधिता देवतैव फलं फलिष्यति[2] । तथा च विवादास्पदं सुखं आराध्यचेतनपूर्वकम् आराधनाप्रसूतत्वात् भूपालाराधनाप्रसूतसुखवत् । तन्न । देवदत्तदेहादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकं देवदत्तं प्रति नियतभोगसाधनत्वात् स्रगादिवदिति

१ कर्म न कर्म सा० । २ ०लं भविष्य० ।

नियतपक्षधर्मतया तत्सिद्धिः। तथा हि, वर्तमानकायनिष्पादकानां भूतसूक्ष्माणां क्षेत्रज्ञस्य प्राग्भवीयमिच्छादिकं प्रेरकम्। तस्यानागतदेहोपादानवेदनाभावात्। अतोऽन्यद्विशेषगुणान्तरं वाच्यम्। तच्च कार्यं भोक्तृविशेषगुणत्वात् सुखवत्। तस्य च कारणं यागादिकमेव भोगनिष्पादकम्। कारणान्तरकल्पनायां कल्पनागौरवप्रसङ्गात्। कल्पनागौरवं च तस्यापि विशेषगुणस्य यागादिव्यतिरिक्तनिष्पाद्यत्वस्वीकारे तज्जनकस्य भोगजनकत्वं यागादिश्च। एवं यदि देवताप्रीतिरपि तन्निदानं को विरोधः। तदेतत्स्वर्गनरक[1]कारणम्। कुतः पुनस्तयोः सिद्धिः। आगमादिति चेत्। न। यत्सुखं तदभिलाषोपनीतत्वादिशून्यमेवेति तर्कसंभवेन योग्यताविरहाद्वाक्यस्याप्रतिपादकत्वात्। न च प्रवृत्त्यनुपपत्तिः। सर्वस्वदक्षिणादावपि सप्तद्वीपाधिपत्यस्यैव नानाजन्मानुगन्तृत्वकालभूयस्त्वादीनां संभवात्। ततो मर्त्यलोकभोग्यमेव सुखं नतु परलोकसिद्धिरिति चेत्। मैवम्। एषां तर्काणां विपर्ययपर्यवसानादाभासत्वात्। स्वर्गसिद्ध्यसिद्धिभ्यां व्याघातात्। एवंभूतस्य चैतद्भुवना[2]संभावितत्वेन लोकान्तरसिद्धिः। एतद्वच्च नरकसिद्धिरपि। तथा चैतदुपभोक्तृदेवशरीरादिवत् प्रेतादिशरीरसिद्धिरपि॥ इति[3] धर्माधर्मौ।

शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धवेद्यत्वात्, घटवत्। श्रोत्रं द्रव्यग्राहकं निरवयवेन्द्रियवत्त्वान्मनोवत्। नित्यश्चाद्रवद्रव्यत्वात्। प्रत्यभिज्ञानाच्च गुणवत्त्वाच्च द्रव्यम्। संख्यावेगादयोऽपि हि शब्दधर्मा अनुभूयन्ते। न चारोपोऽयम्। अशब्दधर्माणां श्रोत्रावेद्यत्वेनाग्रहणात्। न चेन्द्रियान्तरोपनीतं तिक्तो गुड इतिवत्स्यात्। तेन तदानीमप्रतीतावपि संख्यादेः श्रोत्रेण प्रतीतेः। न च स्मृत्युपनीतसंख्यादिसंभेदग्रहः। श्रोत्रस्य तदग्राहकत्वेनायोग्यत्वात्। अन्यथा जम्बीरबीजपूरादौ रसाद्रूपानुमानभङ्गप्रसङ्गात्। तत्कथमम्बरगुणः शब्द इति चेन्न। साक्षादिन्द्रियसंबन्धवेद्यत्वं हि यावत्प्रसक्तपारिशेष्याद्वा निश्चीयते एकदेशपारिशेष्याद्वा। नाद्यः। तत एवाद्रव्यत्वनिरूपणेन लिङ्गग्राहकमानबाधात्। नेतरः। कर्मत्वादेरप्रतिषेधे संयुक्तसमवायादिवेद्यत्वशङ्कायां हेतोरसिद्धतापत्तिः। श्रोत्रं च न नित्यद्रव्यग्राहकं अयोगिबहिरिन्द्रि-

१ °र्गजनकका°। २ °तद्भुवनासंभवित्वेन। ३ °इत्यदृष्टम्॥ श°।

यत्वात्, चक्षुर्वदिति सत्प्रतिपक्षं द्वितीयानुमानम्। यदि तु नित्यद्रव्यग्राहकं स्यान्न व्यापकद्रव्यग्राहकम्। अजसंयोगाभावात्। नाणुग्राहकम्। अणूनामतीन्द्रियत्वात्। नापि विभुद्रव्यातिरिक्तद्रव्यग्राहकम्। निरवयवग्राहकतानुपपत्तिप्रसङ्गात्। अबाधितानुभवसिद्धविरुद्धधर्मसंसर्गविषयत्वात् प्रत्यभिज्ञाया बाधितत्वम्। अनुमानस्य च व्यतिरेकाप्रतीतौ व्यतिरेकासिद्धेः। तत्प्रतीतौ तु तुल्ययोगक्षेमतयैव शब्दस्यानित्यतासिद्धेः व्यतिरेकग्राहकमानबाधात्। अतः शब्दोऽनित्य एव। आरोपोऽपि च गौरोऽहमितिवदुपपत्स्यते। रसानुमानबन्दीग्रहस्त्विन्द्रियसंबन्धविच्छेदेनापि तत्प्रतिसंधानाद्धूमानुमानासिद्धिन्यायेन निरसनीयः॥ स्फोटात्मा शब्दो नाम्बरगुण इति चेन्न। तदसिद्धेः। एकं पदमिति धीरनेकवर्णव्यावृत्तात्मानमेकपटबुद्धिवदेकार्थक्रियाप्रतिसंधानाद्युपाधिवैधुर्याद्रत्नतत्त्वबुद्धिवन्नानाव्यक्तिदर्शनजसंस्कारगम्यं प्रसाधयतीति चेन्न। एकसुप्तिङन्तावच्छेदेन तदुपपत्तेः। अन्यथा किंनिमित्तकः स्फोटेऽपि पदादिव्यवहार इति स्वयमेव परिभावय। किं तर्हि प्रतिपादकम्। क्रमवद्वर्णसंहतिरिति ब्रूमः।

ननु क्रमो न गुणात्मकः। तत्रापि वृत्तेः। नापि जातिभेदः। तद्भेदानां गवादीनां परापरभावानुपपत्तेः। नापि कालभेदः। स्वतस्तस्यासिद्धेः। उपाधीनां चाशब्दात्मनां श्रोत्रेणाप्रतीतेः। शब्दस्य च तस्यैव तद्वत्तां प्रत्यनङ्गत्वात्। तत्कथं प्रतिपादकत्वमिति चेन्न। पूर्वपूर्ववर्णध्वंससाहचर्यस्यैव प्रकृते क्रमार्थत्वात्। अत एव शब्दाभावः श्रोत्रगम्यः[2]। प्रमाणान्तरवेद्यं वा पौर्वापर्यक्रममिति स्थितं शब्दो गुणोऽनित्यश्चेति॥ **इति शब्दः॥**

तथापि कथं चतुर्विंशतित्वम्। रुचिवद्विरुचेरपि संभवात्। यस्मिन्सत्युपात्तमेव नियमेन हीयते। न चेयमिच्छा[3] अभावमात्रम्। विपरीतस्यापि संभवात्। परत्वापरत्ववद्भेदसिद्धेः। दुःखमेव तीव्रद्वेषोऽस्तु। तथा इच्छैवोत्कटा काम इति हानिसंभवात्। ज्वलितबुद्धेर्भेदसिद्धिरिति चेन्न। शीतलितबुद्धेरपि संभवात्। तृप्तता सेति चेत् तुल्यम्। दुःखिताया अपि यत्नवदालस्यसंभवाच्च। न च यत्नाभाव एवायम्। विधित्वेन भासमानत्वात्। गुरुत्व-

१ °मानसि°। २ °त्रग्राह्यः। प्र°। ३ °मिच्छाया अभा°।

वल्लघुत्वसंभवाच्च । न चैतदपकृष्टम् । गुरुत्वमेव लघुत्वम् । तेजस्यपि सत्त्वात्[1] । अन्यथा ज्वलनोद्गमनानुपपत्तेः । न चेदमदृष्टहेतुकं, सर्वत्र गुरुत्वोच्छेदप्रसङ्गात् ।

द्रवत्ववत्काठिन्यं च गुणान्तरम् । न चैतत्स्पर्शभेदः । चाक्षुषत्वेन स्पर्शविशेषत्वानुपपत्तेः । संयोगविशेषः काठिन्यमिति चेन्न । द्रवत्वस्यापि तादृशत्वापत्तेः । स्नेहवद्रौक्ष्यस्य संभवाच्च । परापरभाववत् क्रमयौगपद्यचिरक्षिप्रवामदक्षिणाग्रपृष्ठादिसंभवाच्च । असंख्यातोऽयमपरिमितोऽयमिति विरुद्धव्यवहारादसंख्यापरिमाणसंभवाच्च । इदमस्माद्भिन्नमिति पृथक्त्ववदपृथक्त्वसंभवाच्च । न चायं पृथक्त्वाभावः, तदवधिनिरपेक्षनिरूपणत्वात्[2] । न च स्वरूपमात्रं, पृथक्त्वविलयात् । निद्रायाः संभवाच्च । मध्यत्वसंभवात् । दयादयश्च यतो मृदुतरा भवन्ति[3] । न चैतददृष्टमात्रहेतुकम् । गुरुत्वसंस्कारविलयादित्यास्तां विस्तर इति चेत् । अत्रोच्यते । नेच्छामीत्यरुचिनिरूपणात् । आतुरस्य उष्णे द्वेषवर्तमानतानुभवेऽपीच्छायां सुखीतिवदहं दुःखीत्यनुभवात् । नाप्यालस्यं, 'अलसो निःप्रयत्नो निरुत्साह' इति परमकोषकारवचनाद्यत्नाभाव एतच्छब्दव्यवहारात् । तमोवद्विधित्वेनाभासमानत्वस्यान्यथासिद्धत्वात् । नापि लघुत्वम् । गुरुत्वापकर्ष एव तद्व्यवहारात् । ज्वलनोद्गमनस्यादृष्टहेतुकत्वात् । गुरुत्वप्रतिबन्दीग्रहस्तु पूर्वमेव निरस्तः । नापि काठिन्यं, अकठिनैरपि तन्तुभिरारब्धपटे काठिन्योपलम्भात् । संयोगभेद एवायं स्पर्शभेदो वा । नापि रौक्ष्यम् । अस्निग्धसामानाधिकरण्येनानुभवात् । आर्द्रताहीने शुष्कतावत् । नापि क्रमादिकम्, उपाधिद्वारेणैवान्यथासिद्धेः । परत्वापरत्वादौ तु विशेषदर्शनात् ।

वामत्वं च पूर्वदिङ्मुखावस्थितस्योदीचीदिक्संबन्धित्वम् । दक्षिणादिक्संबन्धित्वं च दक्षिणत्वम् । एवं दिगन्तराभिमुखे वाच्यम् । देहदेशविशेष एव वामत्वम् । मुखापेक्षया ऋजुदेशव्यवस्थितालोकादिसंयोगित्वमग्रत्वम् । पृष्ठव्यवहितालोकमण्डलावच्छेदश्च पश्चात्त्वम् । असंख्यात्वं च अशक्यज्ञानसंख्यावच्छिन्नत्वम् । अशक्यज्ञानहस्तवितस्त्याद्यवच्छेदपरिमाणयोगित्वं वापरि-

१ °पि संभवात् । २ °दवयवि° । ३ °तरता भ° ।

मितत्वम् । अपृथक्त्वं च एतावदवधिनिरूप्यपृथक्त्वाभावसंबन्धित्वम् । दयादयस्त्विच्छाभेदा एव । निरिन्द्रियदेशसंबन्ध एव हि मनसो निद्रेति । परत्वापरत्वसंकर एव मध्यता । गुरुत्वादिबन्दीग्रहस्तु तत्र तत्रोन्मूलित इत्यलम् ।
**इति गुणनियमः ॥**

## इति श्रीन्यायलीलावत्यां गुणविचारः ।

कथं पुनः पञ्चैव कर्माणि, भ्रमणरेचनादेरपि सत्वात् । तत्रान्यथासिद्ध्या उत्क्षेपणादेरपि तथात्वप्रसङ्गात् । गमनं च न चलनातिरेकि । ततो न्यूनातिरिक्ताभ्यां विभागोऽनुपपन्न एवेति चेत् । न । विशेषात् । तथाहि । नालिकायां पतति पत्रादौ कस्यचित्पततीति मतिः, कस्यचित्प्रविशतीति, कस्यचिद्भ्रमतीति । स च जातिपक्षे प्रत्ययप्रबन्धो नोपपद्यते । जातिसंकरप्रसङ्गात् । अपवरकादपवरकान्तरं व्रजति निष्क्रामति प्रविशति इति प्रत्ययान्न निष्क्रमणत्वाद्यपि । अत एव न रेचनत्वम् । तस्य निष्क्रमणात्मकत्वात् । न च स्पन्दनम् । न चोर्ध्वज्वलनं, उत्क्षेपणस्यैव तेजःसंबन्धिनः तादृशत्वात् । अत एव नोन्नमनम् । तस्य निष्क्रमणात्मकत्वात् । पतनं च न, तस्यावक्षेपणात्मकत्वात् । अत एव न नमनम् । अनृजुसंयोगजनकत्वाच्च । तिर्यग्गमनमप्याकुञ्चनमित्याद्यूह्यम् ।

उत्क्षेपणादिकं चानुगतप्रत्ययनियतजातीयसंयोगजनकत्वात्सिद्धम् । कारणजातिनियमं विना कार्ये तदनुपपत्तेः । न च रेचनेऽप्ययं दोषः । तत्र बाधकबलेन जातेरपास्तत्वात् । अविलक्षणप्रभेदसंयोगमात्रजनकं गमनम् । भ्रमणनिष्क्रमणादीनां च परसामान्यवत्त्वमवश्यमपरसामान्यवत्त्वादुत्क्षेपणावक्षेपणवत् । तदेव च गमनशब्दवाच्यम् । यद्वा उत्क्षेपणत्वादिरूपचतुष्कं तावत्कर्मणि चतुर्विधानुगतप्रत्ययसिद्धम् । तच्चोपाधिसामान्यं वास्तु मुख्यसामान्यं वा न नः कापि क्षतिः । चातुर्विध्यमात्रस्य विवक्षितत्वात् । एतद्रूपचतुष्कविवर्जितकर्मजातीयमेव गमनम् । तच्च भ्रमणादिकम् । न चैतद्रूपचतुष्कशालिता तद्विरहाभ्यामन्यः प्रकारः संभवतीति पञ्चैव कर्माणीति ।

## इति लीलावत्यां कर्मविचारः ।

---

१ °दवयविनि° ।

किं पुनः सामान्यसिद्धौ मानम्। गौरित्यभिन्नाकारोऽनुभव इति चेत्। न। विकल्पानुपपत्तेः। तथा हि। कोऽयमभेदावसायः। किमेकव्यक्तिवद्व्यक्त्यन्तरे गौरित्यवसायः, उत व्यक्तीनामेकगोस्वभावतावभासः एकधर्मवत्तयावभासो वा। नाद्यः। एकव्यक्तेर्गोस्वभावतावद्व्यक्त्यन्तरस्यापि गोस्वभावत्वादेवोपपत्तेः। व्यक्तिमात्रस्य वा गौरिति मतिगोचरत्वं गोव्यक्तेर्वा। नाद्यः। अतिप्रसक्तेः। अन्यत्र जातिस्वीकार इति चेन्न। व्यक्तिविशेषस्य तत्त्वात्। अन्यथा व्यक्तिमात्रस्य गोत्वव्यञ्जकत्वं गोव्यक्तेर्वेति प्रत्यवस्थानसंभवात्। न द्वितीयतृतीयौ। न ह्येका गोव्यक्तिरेकधर्मवती वेति प्रतीतिः, किं तु यथैकस्यां गवि गौरित्यवभासस्तथा व्यक्त्यन्तरेऽपीत्येकानेकविमतिगोचर एकाकारोऽवभासते। असत्यभेदप्रतिभासे शाब्दव्यवहारानुपपत्तिरिति चेन्न। अतद्व्यावृत्त्या आकारसाधारण्येन वा तदुपपत्तेः। यदर्थक्रियायां नोपयुज्यते न तत्सद्व्यवहारयोग्यम्। यथा गगनकमलम्। नोपयुज्यते सामान्यमर्थक्रियायामतो न सामान्यं वस्तुभूतम् इति। अत्रोच्यते। अतद्व्यावृत्तौ कस्तदर्थः। एकं स्वलक्षणं एकजातीयं वा। आद्येऽसाधारण्यम्। अन्यत्र जातिस्वीकारः। आकारस्य च किं साधारण्यं साधारणस्वभावत्वं साधारणसंसर्गित्वं वा। आद्ये ज्ञानस्थैर्यप्रसंगः। नेतरः। जातिस्वीकारापत्तेः। अविपर्यस्तप्रतीतिविषयत्वेन वस्तुसत्त्वप्रतीता[1]वर्थक्रियाविरहस्याहेतुत्वात्। स्वप्रतीतिलक्षणायां वा अर्थक्रियायां व्यक्त्यन्तरेऽसंसर्गमाश्रित्य व्यतिरेके[2]स्थितौ हेतोरसिद्धेः। व्यापकस्य कोऽसंसर्गार्थः, असंसर्गिणो वा को व्यापकार्थ इति चेन्न। वैशेषिकनये तस्य पिण्डमात्रगतत्वात्। प्रलये सर्वपिण्डानां उच्छेदे सामान्यमप्युच्छिद्येतेति चेन्न। सर्वसंबन्धिविगमेऽपि स्वसत्ताव्यवस्थितेः। इयमेव तर्हि सर्वगततेति चेत्। न। तस्याः संबन्धिसत्तामाश्रित्य प्रवृत्तेः। अन्यथा नित्यतैव सर्वगतेति महत्पाण्डित्यम्। सर्वगतत्वं तु सर्वत्र समवायो वा संबन्धान्तरं वा। तदितरोपालम्भकहानिप्रयुक्तोपलक्षितव्यतिरेकित्वं वा। नाद्यः। सर्वत्राप्रतीतेः। तद्व्यञ्जकसहकारिविरहादप्रतीतिरिति चेत्। न। संबन्धिद्वययोग्यताया एव प्रयोजकत्वात्। अन्यथा पवनादावपि रूपसंभेदापत्तेः। नाश्वे गोत्वमिति प्रतीतेश्च।

---

१ °सत्वसिद्धावर्थ°। २ °कव्यवस्थि°।

न द्वितीयः । षट्पदार्थातिरिक्तपदार्थास्वीकारात् । असत्येव संबन्धे आनुमानिकसंबन्धबुद्धिजनकत्वरूपमेवैवमिति चेत् । न । तथा सति सर्वत्रानुमानेऽनाश्वासापत्तेः । न तृतीयः । तद्व्यतिरेकेणैव घटादावपि तद्बुद्ध्यभावात् । स्वव्यतिरेकेणापि घटस्यानुपलम्भो न तु सामान्यस्य कस्यचित् कदाचिदिति चेत् न । नित्यतैषा न सर्वगतता । ततो गोव्यक्तिभिन्नपिण्डेऽप्यसत्वेन सर्वगतत्वमिति सर्वमनाकुलमिति ।

सामान्यं द्विविधं परमपरं च । तत्र परं सत्ता । नन्विदमसंबद्धं, प्रमाणग्रहणयोग्यतैव सत्ता । प्रमाणग्रहणयोग्यता वस्तूनां स्वरूपं, तत् व्यावृत्तं चेदनुगतव्यवहारासिद्धिः । अनुवृत्तं चैतत्सैव सत्तेति चेन्न । व्यावृत्तमेव हि स्वरूपं सत्ता । अनुवृत्तव्यवहारस्तु प्रमितत्वोपाध्यालम्बनः । सच्छब्दप्रवृत्तिरपि तत्रैव । यद्वा सामान्यविशेषसमवायव्यावृत्तेष्वेव स्वरूपेषु सदित्यनुगतव्यवहारोऽस्तु । अत्रोच्यते । प्रमितत्वेन तुल्येषु पदार्थेषु भावाभावव्यवहारवैचित्र्यानुपपत्तेः । भावव्यवहारगोचरस्य भावस्यैव सत्तास्वभावत्वात् प्रमितत्वम् । भावव्यवहारगोचरो भावविरोधित्वं वा भावव्यवहारगोचर इति चेत् न । अभावव्यवहारगोचरस्य प्रमितत्वेन विरुद्धभावाभावव्यवहारप्रसङ्गात् । भवत्येवेति चेत् । न । घटाघटादिव्यवहारमर्यादया निषेध्यनिषेधव्यवहारयोः परस्परविरुद्धप्रतिबन्धस्थितौ भावाभावव्यवहारयोरपि परस्परविरुद्धनिमित्तकत्वव्यवस्थितेः । तस्माद्विमतिविषयाणि द्रव्यगुणकर्माण्येकसामान्यवन्ति, अनित्यत्वात् गोवत् । न चेदेवं गोत्वमपि न स्यात् । सास्नादिमत्त्वेनैव गोव्यवहारोपपत्तेः । न च भिन्नानां सामान्यविशेषसमवायवदभिन्नव्यवहारगोचरत्वं । सर्वत्र सामान्योच्छेदप्रसङ्गात् । सामान्यादौ चारोपितसत्तावलेनैव तदुपपत्तेः । अपरं द्रव्यत्वादि ।

ननु परापरव्यतिरिक्तमपि सामान्यमस्तु रजतत्वकलशत्ववत् । न । परस्परपरिहारवतोः सामान्ययोः समावेशे तत्तज्जातीयविरोधोच्छेदापत्तेः । कलशजातीयं च रजतसामग्र्यपेक्षकारणजन्यं तन्निरपेक्षकारणजन्यं वा । आद्ये रजतसामग्रीविरहिणि कनककलशे नास्त्येव रजतकलशत्वमिति पराप-

१ °मसिद्धम् । २ °रानुपपत्तिः । अ° । ३ °यवद्यावृ° । ४ ° हारगोचरत्वप्र° ।

रभाव एव । द्वितीये तु स्वतन्त्रसामग्रीप्रसूतयोः रजतकलशयोर्वैजात्यमेव तन्तुपटवत् । उभयथापि न नियमविरोधः । अस्तु वा परापरव्यतिरिक्तमपि तृतीयं, तथापि न काचित्क्षतिः । तथा च समुच्चये चकारः परमपरं चेति ॥

## इति न्यायलीलावत्यां सामान्यविचारः ।

समानजातिगुणकर्मकार्याः परमाणवोऽन्योन्यव्यावर्तकधर्मसंबन्धिनः व्यावृत्तज्ञानविषयत्वात् द्रव्यत्वाद्वा, गवादिवत् । व्यावृत्तज्ञानविषयाश्च द्रव्यत्वाद्घटादिवत् । अणवश्च संशयविषयाः । द्रव्यत्वात् । स च संदेहो विशेषदर्शनान्निवर्तते संदेहत्वात्, स्थाणुपुरुषसंदेहवत् । ते च निश्चयविषयाः द्रव्यत्वात् । स च निश्चयो विशेषदर्शनाधीनो निश्चयत्वात् । न पृथक्त्वेन, सिद्धसाधनात् । व्यावृत्तबुद्धिश्च किं अन्योन्याभावविशिष्टबुद्धिः व्यावर्तकधर्मविशिष्टबुद्धिर्वा । नाद्यः । अन्योन्याभावेनैवोप[1]पत्तेः । न द्वितीयः । स्वगतसंख्यापरिमाणादिभिरेवोपपत्तेः । संशयविषयाश्च योगिनोऽयोगिनो वा । नाद्यः । सर्वज्ञत्वेन तस्य संदेहाभावात् । न द्वितीयः । अयोगिनां परमाणुदर्शनस्याभावात् । प्रमेयत्वेन समवायस्यापि संशयविषयत्वे विशेषसंबन्धप्रसङ्गात् । निश्चयत्वं च विशेषनिश्चयेनैव व्यभिचारीति न विशेषसिद्धिः । मैवम् । समानजातिगुणकर्मकार्याणामणूनां द्रव्यत्वेनान्योन्यव्यावर्तकसमवायिधर्मविशिष्टबुद्धिविषयत्वस्य साधनात् । न च पृथक्त्वादिकमेव परमाण्वन्तरात्परमाणोर्व्यावृत्तिबुद्धिजनकमस्तु । तस्य परमाण्वन्तरवृत्तिपृथक्त्वादिना सदृशत्वात् । याहि यतो व्यावृत्तबुद्धिः सा न तत्सदृशधर्मकार्या यथाऽश्वात्कुञ्जरस्य । तदणोरपि नाण्वन्तराद्व्यावृत्तबुद्धिस्तत्सदृशधर्मकार्या सत्ता वा सामान्यसमवायव्यतिरिक्तभावासंसर्गिणी जातित्वात् गोत्ववत् ॥

## इति लीलावत्यां विशेषविचारः ।

किं पुनः समवायसिद्धौ मान[2]म् । प्रत्यक्षमनुमानं वा । नाद्यः । तदभावात् । इह तन्तुषु पट इत्यत्र प्रत्यक्षमस्ति इति चेन्न । विचारासहत्वात् । समवायो ह्याधारबुद्धिं वा कुर्यात्, आधेयबुद्धिं वा, उभयबुद्धिं वा । नाद्यः । उभयत्रापि

---

१ °नैव गतार्थत्वात् । न° । २ °नम् । अध्यक्ष° ।

इहेति प्रतीतिप्रसङ्गात् । न द्वितीयः । उभयत्राप्याधेयबुद्धिप्राप्तेः । न तृतीयः । उभयत्राप्युभयबुद्धिप्रसक्तेः । जातिजातिवन्तौ संबद्धौ इत्यनुभवोऽस्तीति चेत् । न । अत्रानुभवे हि समवायस्तदीयत्वेन वानुभूयते, अन्यदीयत्वेन वा, संबन्धस्वरूपमात्रेण वा । नाद्यः । तदीयत्वसंबन्धान्तरत्वेनानवस्थापातात् । नेतरः । अन्यत्रैव संबन्धबोधप्रसङ्गात् । न तृतीयः । क्वचिदपि संबन्धप्रत्ययानुपपत्तेः । असत्येव संबन्धे तदीयत्वमनुभूयत इति चेत् । न । जात्यादेरप्यसत्येव संबन्धे तदीयत्वानुभवप्रसंगात् । असत्ख्यातिप्रसंगाच्च । संबन्धस्वरूपमात्रमेव प्रथते तस्य जातिव्यक्तिभ्यां निरूपणात्तदीयत्वव्यपदेश इति चेन्न । जातेरपि व्यक्तिनिरूपणीयत्वात्तदीयत्वेन व्यपदेशापत्तेः । संबन्धे च दृश्यसंबन्धानुपलम्भे नायमेतदीयः संबन्ध इति प्रतीतिप्रसंगाच्च । सति नीलत्वनीलगुणद्रव्याणां च समवायेनैकसंवेदनगोचराणां कस्य केन समवाय इति व्यवस्थानुपपत्तेः । नानुमानम् । लिङ्गाभावात् । इहेति बुद्धिर्लिङ्गमिति चेत् । न । समवायाप्रत्यक्षत्वे इहेति बुद्धेर्निर्विषयाया अनुपपत्तेः । आधाराधेयभावाख्यं संबन्धान्तरमेव तद्गोचर इति चेत् । न । दूषितत्वात् । पदार्थान्तरस्वीकारप्रसंगाच्च । तत एवेहेति प्रत्ययोपपत्तौ समवायाननुमानप्रसंगाच्च । जात्यादिविशिष्टप्रत्ययो लिङ्गमिति चेन्न । विशेषणविशेष्यभावस्य संबन्धान्तरस्य स्वीकारप्रसंगात् । एवं विशिष्टबोधोत्पत्तौ समवायाननुमानप्रसङ्गाच्च । उभयाश्रयस्य च संबन्धस्याभिन्नरूपस्यैकत्र विशेषणमन्यत्र विशेष्यमिति विलक्षणप्रत्ययजनकत्वानुपपत्तेः । प्राधान्यं विशेष्यत्वं गुणत्वं विशेषणत्वमिति चेन्न । तयोरनिर्वचनात् । असत्येव संबन्धे विशेषणविशेष्यप्रत्ययगोचरत्वं तत्त्वमिति चेत् । न । असत्ख्यातिप्रसंगात् । विशिष्टव्यवहारजनन योग्यं ज्ञानमेव विशेषणविशेष्यभाव इति चेत् । कः पुनर्विशिष्टव्यवहारः । प्रतीतिर्वा व्यपदेशो वा । नाद्यः । तस्या असद्विषयत्वेन असत्ख्यातिप्रसङ्गात् । सद्विषयत्वे संबन्धान्तरस्वीकारप्रसंगात् । न द्वितीयः । स हि विशिष्टाकारप्रत्ययजनको न वा । न चेत् । नानर्थकव्यपदेशेन सह विषयविषयिभावः । विशेषणविशेष्ययोर्जनकश्चेत् । प्रत्ययस्य सदसत्प्रकाशनशीलत्वेन पूर्वदोषानतिवृत्तेः । कुतश्चैकैव प्रतीतिर्निमित्तभेदमन्तरेणैकत्र विशेषणव्यवहार-

मन्यत्र विशेष्यव्यवहारमर्पयति । अत्रोच्यते । जात्यादिगोचरो विशिष्टव्यवहारः संबन्धनियतः । भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् । सघटं भूतलमिति व्यवहारवत् । असति संबन्धावभासे विशिष्टव्यवहारः कुत इति चेत् । गुणद्रव्यविषयात् बुद्धिविशेषादिति ब्रूमः । अघटं भूतलमित्यत्र घटाभावभूतलविषयाद्बुद्धिविशेषादिव । कुतस्तर्हि संबन्धानुमानं । बुद्धिविशेषादेव विशिष्टव्यवहारोपपत्तेः । न हि विशिष्टव्यवहाराजनकत्वेन संबन्धानुमानम् । अपि तु तद्व्यापकत्वेन । व्यापकत्वं च तस्य दृष्टान्तप्रतीतमेव । तदभावेऽपि तद्बलेन संबन्धानुमानम् । तथा सति ध्वंसस्य समवायिकारणवत्त्वेन भावत्वापत्तेः । विशिष्टव्यवहारस्तु विशिष्टव्यपदेशः । कस्तस्य विषयः । विशेषणविशेष्यस्वरूपम् । कुतस्तर्हि तयोः संबन्धावभासः विशेषणविशेष्यवाचकपदसंनिधानादारोपितसंबन्धगोचरः । कुतः पुनरनारोपितसंबन्धगोचरो न स्यात् । समवायस्याप्रतीतेः तदितरस्याभावात् । विशेषणत्वं चाप्रधानत्वं, प्राधान्यं च विशेष्यत्वम् । तच्च दण्डी पुरुष इत्यत्र पुरुषस्य दण्डाधारत्वम् दण्डपतनप्रतिबन्धकत्वं च । आधेयत्वं दण्डस्य प्रतिबद्धगुरुत्वाधिकरणत्वमप्राधान्यम् । समवायिकारणत्वं च तन्त्वादेर्विशेष्यत्वं समवायिकार्यत्वं च पटादेर्विशेष्यत्वम् । समवायित्वे सति व्यञ्जकत्वं च व्यक्तीनां विशेष्यत्वं, व्यङ्ग्यत्वं विशेषणत्वम् । नित्येषु च द्रव्यत्वं विशेष्यत्वं, गुणत्वं च विशेषणत्वम् । अभावेऽपि तत्प्रतियोगित्वानधिकरणत्वं विशेष्यत्वम् । अभावत्वं च विशेषणत्वम् । तन्तुमान्पटः समवायिनाविमावित्यादौ तु विशेषणविशेष्यसादृश्यनिबन्धनोऽयमुपचरितो विशेषणविशेष्यव्यपदेशोऽग्निर्माणवक इतिवत् । प्रतीते च समवायेऽयं विशेषणविशेष्यव्यवहारः । तत्प्रतीतेस्तु पूर्वमयुतसिद्धिसादृश्यादसंबन्धानुपलम्भनिबन्धनः । विशेषणविशेष्यशब्दौ च गवादिशब्दवदनेकार्थौ, नतु सर्वसाधारणं विशेषणत्वं विशेष्यत्वं वास्तीति ॥

न्यायनये तु प्रत्यक्ष एव समवायः जातिव्यक्तिभ्यां सह स्वरूपेणानुभूयते । अननुभवे गौरयमिति गोत्वपुरोवर्तित्वयोः सामानाधिकरण्यबोधो न स्यात् । द्वयोः समानेनाधिकरणेन संबन्धः सामानाधिकरण्यम् । अयमयं,

गोत्वं च गोत्वमिति व्यधिकरणोऽनुभवः स्यात् । गोत्वसमवायीति सामानाधिकरण्यप्रत्ययवद्धिनैव संबन्धावभासं गोत्वसंबन्धीति प्रत्ययो भविष्यतीति चेत् न । तत्रापि संबन्धप्रतिभानात्[1] । तर्हि अनवस्था । न । तत्र संबन्धप्रतीतेरारोपितत्वात् । जातावप्यारोपितास्त्विति चेन्न । बाधकाभावात् । तत्र किं बाधकम् । अनवस्था । इष्यत एवं संबन्धानन्त्यमिति चेत् । इष्यतामस्त्वानन्त्यम् । सर्वत्र चारोपे आरोपानुपपत्तेः । आरोप्यस्य संबन्धस्याभावात् । संयोग[2] एवारोप्यतामिति चेन्न । तद्व्यावर्तकस्याद्रव्यत्वस्यायुतसिद्धस्य वोपलम्भात् । संयुक्तावुभाविति प्रत्ययापत्तेश्च । असंबद्धस्वरूपत्वे समवायस्य नियतसंवन्धिनियमे वा आरोपनियमः । कथम् । आरोपजनकशक्तिवैचित्र्यात्स्वशरीरे आत्मारोपवत् । अभिन्न एव चन्द्रमसि द्वैतारोपवत् । संसृष्टत्वजिज्ञासायां सत्यां भेदारोप एव संबन्धारोपः । ज्ञातोऽयं घट इत्यत्रापि सामानाधिकरण्यप्रत्ययबोधवशेन संबन्धवशेन संबन्धप्रसक्तिरिति चेत् । न । अतीतानागतयोरसत्वेन संबन्धविरोधात् । तन्मर्यादया वर्तमानस्यापि ज्ञानस्य संबन्धानुपपत्तेः । सामानाधिकरण्यप्रत्ययाभावेन व्यपदेशस्योपचरितत्वात् । अबाधितसामानाधिकरण्यबोधस्य चानुपप्लुतसंबन्धानुभवपूर्वकत्वनियमात् दण्डकुण्डलौ यज्ञदत्तसंसृष्टावितिवत् । यद्वा जात्यादिकं स्वाश्रयेण संबद्धमन्येनासंबद्धमनुभूयमानं स्वातिरिक्तसंबन्धं सहायमपेक्षते । अन्यथा विचित्रप्रत्ययानुपपत्तेः । समवाये तु विशेषणविशेष्यभावः संबन्धोऽवभासते न तु तत्र संबन्धान्तरम् । न हि गोत्वसंबन्धवानयमितिवद्गोत्वसंबन्धवानयं तत्संबन्धिवान्वेति प्रथास्ति । यदि तु सकृत्संबन्धः प्रथते न काचित्क्षतिः । संबन्धानन्त्येऽपि नैयायिकानामनियतपदार्थवादित्वेन विरोधाभावात् । तथा च न्यायवार्तिकम् । 'समवाये अभावे च विशेषणविशेष्यभावात्' इति । न चैतद्भेदाभेदबलादनुपपन्नम् । विरोधेन तयोरनुपपत्तेः । अनुभवसिद्धत्वादविरोध इति चेत् । न । तदभावात् । न हि जातिर्जातिमतोऽभिन्नेति कश्चिदनुभवति । गौरयमिति सामानाधिकरण्यानुभवेऽभेदानुभव इति चेत् । किं पुनरिदं सामानाधिकरण्यम् । किं भिन्नयोर्धर्मयोरभिन्नाधिकरणसंबन्धित्वं उत

---

१ °भासनात् । २ संबन्ध ए° ।

धर्मिणोरभेदः। नाद्यः। तथासति धर्मयोरधिकरणाभेदमात्रासिद्धेः। न द्वितीयः। तत्रानुभवाभावात्। अथ गौरित्यनुभवस्य किमालम्बनम्। गोत्वं व्यक्तिस्तत्समवायश्चेति। एवं सति गोत्वं व्यक्तिः संबन्धश्चेति प्रतीतिः स्यान्न गौरिति। यदि तु गोत्वं व्यक्तिस्तत्संबन्धश्चेति गौरिति प्रतीतिविषयः, गोत्वसंबन्धो भूतलमित्यत्र किं न गौरिति प्रत्ययः। भूतलस्य गोत्वसंबन्धित्वेनानिरूपणादिति चेत्। न। तर्हि गोव्यक्तावपि तत्प्रत्ययः। तस्या अपि समवायसंसृष्टत्वेनानिरूपणात्। गोत्वसंबन्धवैशिष्ट्यं तस्या गोत्वमिति चेत्। किं वैशिष्ट्यं, तदीयत्वं तच्चेत् संबन्धान्तरमनवस्था। तया गोत्वेन च समवायस्य निरूपणं वैशिष्ट्यमिति चेत् तद्रूपेणापि समवायनिरूपणात् तस्यापि तदीयत्वप्रसङ्गः। तेन सह [1]समवायस्य निरूपणनियमो नास्तीति चेत्। न। तर्हि गोव्यक्त्यापि निरूपणा[2]त्। तस्मादनासादितगोत्वसमवायव्यक्तिभेदमखण्डमसाधारणं गौरिति प्रत्ययगोचरः। तदेव च देशकालादिभेदेनानुगते गौरितिप्रत्यये भासमानं भिन्नमभिन्नं वावभासत इति प्रत्यक्षसिद्धम्। अत्रोच्यते। गोत्ववैशिष्ट्यमेव गोरूपत्वम्। वैशिष्ट्यं च समवायस्य स्वरूपशक्तिनियमेन तत्र गोत्वसंबन्धावभासजनकत्वम्। तस्य च गोत्वव्यञ्जकरूपस्य प्रत्ययान्तरेषु भेदेन भासमानस्यैकाकारत्वमेकधर्माधिष्ठानत्वमनुभूयते।

ननु तत्सामान्यं प्रथमपिण्डोपलम्भकालेऽनुवृत्तत्वेनानुभूयते व्यावृत्तत्वेन वा। नाद्यः। प्रथममनुवृत्ततानवभासनात्। द्वितीये तु व्यक्तेरभिन्नमेवानुभूतमिति। अथ न भेदेन नाप्यभेदेन किंतु स्वरूपेणानुभूयत इति मतम्। न। सामा[3]न्यस्यानुवृत्तत्वेनानुवृत्ततावभासप्रसङ्गात्। मैवम्। अनेकव्यक्तिसमवायित्वं हि सामान्यस्यानुवृत्तत्वम्। तेन तदप्रतीतावपि जातिस्वरूपावभासोपपत्तेः। यदि भिन्ना जातिः स्यात् व्यक्तिसंबद्धापि प्रतीयेतेति चेत्। न। नित्यसंबन्धबलेनैव तन्नियमात्। अथ समवायरहितत्वमभिन्नत्वम्। तन्न। समवायस्य साधितत्वात्। स्वरूपभेदेऽपि अन्योन्याभावरहितत्वमभिन्नत्वमिति चेन्न। इदमिदं न भवतीति प्रत्ययगोचरस्य भावस्य अन्योन्याभावविरहे सर्वत्रान्योन्याभावविरहप्रसङ्गात्। अथ गौरिति जातेरज्ञानेऽपि व्यक्तिज्ञा-

१ सह आदिस°। २ °पि अश्वेनापि नि°। ३ °न्यस्वरूपस्या°।

नाज्जातिज्ञानेन गौर्गौरिति व्यक्तेरवश्यमुपलम्भाज्जातिर्व्यक्तेरभिन्ना व्यक्तिस्तु जातेर्भिन्नेति भिन्नाभिन्नत्वमनुभवसिद्धमिति चेत् । न । जातिव्यञ्जकत्वेन व्यक्तेरवश्यमुपलम्भो जातिप्रतीतौ न तु जात्यभेदेन । एका हि जातिरनुभूयते भिन्ना तु व्यक्तिरिति नानुमानम् । तद्धि भिन्नमभिन्नं वा भिन्नाभिन्नं साधयेत् । नाद्यः । सत्प्रतिपक्षतापत्तेः । न द्वितीयः । तदन्वयि व्यतिरेकि वा । नाद्यः । भिन्नाभिन्नत्वस्य क्वचिदपि दर्शनाभावात् । न द्वितीयः । तस्य स्वतोऽनुमानत्वेनानभ्युपगमात् । सामानाधिकरण्यानुपपत्तिरत्र मानमिति चेत् । न । शाब्दसामानाधिकरण्यस्य तत्प्रवृत्तिनिमित्तसामानाधिकरण्यादेवोपपत्तेः । अर्थसामानाधिकरण्यानुभवस्य च धर्मधर्मिणोरभेदाभावेऽपि एकाधिकरणत्वेनैवोपपत्तेः । स्वतन्त्रयोर्गोत्वशुक्लगुणयोर्द्रव्याद्भेदे सामानाधिकरण्यमनुपपन्नमिति चेन्न । समवायबलेन तदुपपत्तेः । स्वतन्त्रः समवायो न तदुपपादयितुं क्षम इति चेन्न । किं तस्य स्वातन्त्र्यं, स्वमहिम्ना पराश्रित[1]बुद्ध्यजनकत्वं वा ताभ्यामसंबद्धत्वं वा । नाद्यः । धर्माणां धर्मिण्याश्रितबुद्धिजनक[2]त्वेनैव तस्य स्वग्राहकमानसिद्धत्वात् । नेतरः । [3]अधिष्ठानाभावात् । असंबद्धत्वेऽपि आश्रितबुद्धिजनकस्वभावत्वनियमेनैव सामानाधिकरण्यबुद्धिनिर्वाहकत्वात् । भेदाभेदाभ्यां व्यावृत्तस्य वास्य गन्धवत्त्वस्येव संदेहापादकत्वात् । अन्यथा भुवोऽपि नित्यानित्यरूपतापत्तेः । इति समवायः ॥

## इति श्रीन्यायलीलावत्यां विभागपरिच्छेदः समाप्तः ॥

व्यावृत्तत्वेन पदार्थज्ञानं तत्त्वज्ञानम् । तच्च वैधर्म्याधीनम् । तदपि [4]व्यतिरेकि [5]प्रमाणमिति तत्परिच्छेदोऽयमारभ्यते । ननु व्यतिरेकि नानुमानम् । जीवच्छरीरं सात्मकं इच्छावत्त्वात् । यन्निरात्मकं न तदिच्छावत् । यथा घटः । इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः, अष्टद्रव्याश्रितत्वेनानुपपत्तौ गुणत्वात्, न यदेवं न तदेवम्, यथा भुवो रूपमित्यादिकं हि तत् । अत्र च पक्षविशेषणं प्रतीतं न वा । न चेदसिद्धविशेषणः पक्षः । प्रतीतं चेत् । यत्र तत्प्रतीतं तत्र हेतोर्वृत्तिर्व्यावृत्तिर्वा । वृत्तिश्चेदन्वयव्यतिरेकित्वं, व्यावृत्तिश्चेदसा-

---

१ °रार्पित° । २ °कस्वभावत्वे° । ३ °अनिष्ठाभा° । ४ °पि केवलव्य° । ५ °रेक्यनुमानमि° ।

धारणानैकान्तिकता। अनध्यवसितो वा अप्रसिद्धसाध्यसंसर्गमिव साध्यविशेषणमप्यप्रसिद्धमेव स्वशक्तिवैचित्र्याद्व्यतिरेकी साधयतीति चेन्न। शशविषाणादिमत्त्वसाधनापत्तेः। दृश्यानुपलब्धिबाधितत्वेन शरीरस्य शशविषाणादिमत्त्वासाधनं न त्वप्रसिद्धविशेषणत्वेनेति चेत्। न। अतीन्द्रियशृङ्गसंसर्गाद्यनुमानापत्तेः। साध्यविशेषणासिद्धौ तद्व्यतिरेकनिरूपणायोगात्साध्यसाधनयोर्व्यतिरेकव्याप्तेरसिद्धेः। नह्यात्माप्रतीतौ निरात्मको घट इति शक्यं वक्तुम्। न च नैरात्म्यं घटस्य प्रत्यक्षवेद्यं, तस्य तत्रासामर्थ्यात्। नानुमानगम्यं, क्वचिदपि नैरात्म्याप्रतीतावन्वयिनो लिङ्गस्याभावात्। व्यतिरेकिणस्तु सात्मकत्वप्रतीतिं विनाऽनुपपत्तेः। एकपदार्थवृत्तिना चेच्छादिमत्वादिना असाधारणधर्मेण प्रतीतपदार्थानुमाने घटादावप्यसाधारणकलशत्वादिधर्मोपलम्भेन स्वेच्छाकल्पिततत्तदसाधारणधर्मवत्त्वानुमानप्रसङ्गात्। सामान्यतोदृष्टानुमितमिच्छादिसमवायिकारणम्। तद्व्यतिरेकश्चेच्छादिकार्यनिवृत्त्या घटादौ प्रतीतः। तत्संसर्गस्तु देहे साध्यत इति चेत्। न। तस्य कार्यात्कारणमात्रानुमानादेवासिद्धेः। व्यतिरेकिणाष्टद्रव्यव्यतिरिक्तद्रव्यसमवायिकारणवत्वानुमाने चोक्तदोषानिवृत्तेः। द्वितीयानुमाने च यदि द्रव्याश्रितत्वमात्रं साध्यते तदा गुणत्वादेव सिद्ध्यतीत्यष्टद्रव्याश्रितत्वानुपपत्तिर्विशेषणं व्यर्थम्। अन्वयिनैव गुणत्वात्। तत्सिद्धौ व्यतिरेकिणो व्यक्तस्याप्रयोगानुपपत्तेः। अष्टद्रव्यातिरिक्तद्रव्यसाधने च व्यतिरेकव्याप्तेरसिद्धेः। साध्याप्रसिद्धौ तु तत्संदेहानुपपत्तौ पक्षस्याप्रतीतेर्हेतोः पक्षधर्मत्वानुपपत्तेः। अत्रोच्यते। अनिश्चितत्वेऽपि विशेषणस्य संभावितत्वात् इच्छादीनां द्रव्याश्रितत्वेऽनुमितेऽष्टद्रव्यातिरिक्ताश्रितत्वं अष्टद्रव्याश्रितत्वं वेति विप्रतिपत्तेरेव संशयोपपत्तौ द्रव्याश्रितत्वविशिष्टेच्छादिषु अष्टद्रव्यातिरिक्ताश्रितत्वमाशङ्क्यमानं शङ्काविषयपर्यालोचनायामष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वशङ्कामुत्पादयति। तस्याश्चाष्टद्रव्याश्रितत्वविपर्ययकोटावनुमानप्रतिनिधीभूतप्रसङ्गवत्त्वमेवाभिमतकोटिगोचरे संभावनात्वं तत्सामर्थ्येन तदेककोटिगोचरस्मृतिजनकत्वं वा। संभावितस्यच विशेषणस्य पक्षाप्रसिद्धविशेषणत्वनिरासहेतुत्वात्। प्रतिबन्धबोधगोचरव्यतिरेकनिरूपक-

---

१ °यदर्शनरङ्ग°।

त्वाच्च । यदि वा सामान्यतो निश्चितत्वेनोक्तचोद्यनिरासात् । यद्विपर्यये समीहितप्रसक्तिः प्रसरति तन्मानप्रवृत्तियोग्यमवधारितं विप्रतिपत्तिवाक्याच्छङ्कातो वा प्रतीयमानम् । इदं च तथेति सामान्यतो मानप्रवृत्तिगोचरत्वे विशेषप्रमाणापेक्षायां व्यतिरेकिण उपन्यासात् । यद्वा सामान्यतोदृष्टानुमितद्रव्याश्रितत्वादिना व्यतिरेकव्याप्तिनिश्चयेऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वविशेषनिरूपणमष्टद्रव्याश्रयत्वे बाधकसाचिव्याद्गुणत्वं स्यात् । एवंभूतरूपाभावे त्वप्रसिद्धविशेषणत्वम् । एवं सति सामान्यतोऽन्वयव्याप्तेरेव विशेषनिरूपणमस्त्विति चेत् । अस्तु उपायस्यानुपायतोपालंभाय, न तु नानात्वम् । यदि वेच्छादिसमवायिकारणमात्रस्याष्टद्रव्यानात्मकत्वे तैस्तैरनुमानैर्निश्चिते तत्संबन्धित्वं जीवद्देहस्य साध्यते । न चैवमप्रसिद्धविशेषणत्वम् । अनुमानेन विशेषणस्य निश्चितत्वात् । न च व्यतिरेकिवैयर्थ्यम् । तेन सह जीवच्छरीरसंबन्धस्य व्यतिरेकिवेद्यत्वात् । किंत्वेतन्न सर्वव्यतिरेकिसमाधानम् ।

ननु च लक्षणं सकललक्ष्यवृत्तित्वेन समस्तविपक्षव्यावृत्तत्वेन च निश्चितमभ्युपगन्तव्यम् । अन्यथाऽव्याप्तेरतिव्याप्तेर्वा लक्षणत्वप्रसंगात् । तस्यच प्रयोजनं भेदानुमानं व्यवहारानुमानं वा । नाद्यः । भेदानुमानवैयर्थ्यात् । तथा ह्येकजातीयस्यातज्जातीयान्योन्याभावविशिष्टत्वानुमानं तेन धर्मेण धर्मिणोऽसाधारणव्यवहारप्रवृत्तिः फलम् । सच तल्लक्षणविशिष्टताबोधेनैव[1] सिद्ध्यतीति व्यर्थं तदनुमानम् । व्यवहारस्तु शब्दप्रयोगात्मा गन्धवती पृथिवीत्युपदेशबलादेव गोजातीये गौरितिवद्भविष्यति । असाधारणसंवेदनरूपोऽपि व्यवहारो व्यावर्तकधर्मात्मकलक्षणाधिष्ठितत्वगोचरो भविष्यति । हानोपादानलक्षणोऽपि च व्यवहारस्तज्जातीयस्येष्टानिष्टसाधनत्वनिबन्धनो भविष्यति जलानलयोरिव शीतार्तस्य । ततोऽव्यापकातिव्यापकविलक्षणधर्ममात्रोपदेशो लक्षणं न त्वनुमानमिति । मैवम् । यथाभिजातरत्नजातीयमेतद्व्यवहर्तव्यमिति विशिष्टरत्नजातिमत्त्वेन तल्लक्षणेन वा तज्जातीयस्य क्रयादिव्यवहारयोग्यत्वमनुमीयते तथेहापि कर्तव्यपृथिवीत्युपदेशव्यवहारयोग्यतानुमानसमये व्यतिरेक्यनुमानं लक्षणम् । अथवा व्यतिरेक्यनुमानं लक्षणमिति योग्यतया तस्याव्याप्त्यतिव्या-

१. शिष्टभावबो. ।

प्तिविरहिणोऽविद्यमानसपक्षस्य विपक्षमात्रव्यावृत्तस्य पक्षधर्मस्य व्यतिरेकिस्वभावत्वात् न तु साध्यस्य कस्यचिदनुमानार्थं तदुपन्यासः । तस्य च प्रत्यक्षेण पृथिवीत्वाद्यवान्तरजातिनिरूपणेन सहकारित्वेनोपन्यासः । न ह्यन्यथा प्रत्यक्षेण पृथिवीत्वं शक्यनिरूपणम् । लौकिकप्रत्यक्षातिक्रमेऽपि द्रुमादौ पृथिवीत्वस्वीकारात् । रूपादिमत्त्वे च पृथिवीति प्रसङ्गात् । आत्मादौ च ज्ञानाधारवत्त्वेनात्मजातीयत्वस्य व्यतिरेकिणैवानुमानात् ।

प्रमेयमात्रस्य तर्हि किं सामान्यलक्षणम् । लक्षणं हि तन्मात्रस्य विपक्षव्यावृत्तिज्ञापकमिष्टं, प्रमेयमित्यसाधारणव्यवहारप्रवृत्तिनिमित्तं वा । नाद्यः । विपक्षव्यावृत्तेरसंभवे तत्प्रख्यापकप्रश्नानुपपत्तेः । न द्वितीयः । प्रमाविषयस्यैव तत्त्वात् । सामान्यलक्षणं विना कथं विशेषलक्षणमितिचेत् । न । नियमानभ्युपगमात् । लक्षणोपयुक्तसामान्यसंभवे हि सामान्यलक्षणावसरो न तु विशेषलक्षणप्रवर्तकत्वेन ।

तत्र भावः सदिति प्रत्ययविषयः गुणाश्रयो द्रव्यम् । तत्र यद्यपि संबन्धो न सदातनः, योग्यतानुरूपमननुगतं द्रव्यत्वं तु श्लिष्टं, तथापीहात्यन्तायोगव्यवच्छेदो लक्षणार्थः । सामान्यवानचलनात्मकः समवायिकारणताहीनो गुणः । संयोगविभागासमवायिकारणं कर्म । द्वित्वे तात्पर्यम् । तेन संयोगविभागव्युदासः । न चाकृतफलेनासिद्धिः । तस्यापि हेतुस्वभावग्राहकमानविषयीकृतत्वात् । तदभावस्य तु सहकारिविरहाधीनत्वात् । दीपोर्ध्वनयनावच्छिन्नबीजवत् । अन्यथा तद्भ्रान्ततापत्तेः । नित्यमेकमनेकवृत्ति सामान्यम् । एकद्रव्याः स्वभावसन्तो विशेषाः । नित्यः संबन्धः समवायः । गन्धवती पृथिवी । स्नेहवत्य आपः । भास्वररूपं तेजः । अरूपः स्पर्शवान्पवनः । शब्दाश्रय आकाशः । असाधारणपरत्वापरत्वाद्यसमवायिनिदानसंयोगाश्रयो विभुः कालः । न च परत्वानुमेयः । तदन्यकारणानामपि कार्योन्नेयत्वात् । उक्तसंयोगानाधारो विभुः । विशेषगुणरहिता दिक् । ज्ञानाधार आत्मा । अस्पर्शपरमाणुर्मनः । रूपादीनां चतुर्णां स्वस्वसामान्यम् । न तु नयनादिग्राह्यता । अतीन्द्रिये तदभावात् । योग्यताया अनुगताया उक्तानतिरेकात् । गणनव्यवहारप्रयोजिका संख्या । परिमाणं मानव्यवहारयोगि । पृथगिति

बुद्धेः असाधारणो विषयः पृथक्त्वम् । कार्यसंबन्धः संयोगः । यद्विशिष्टे विभक्तप्रत्ययः स विभागः । एवं परत्वापरत्वे ।

अर्थप्रकाशो बुद्धिः । अर्थः स्वाभाविको विषयः । तेन सहैव प्रकाश्यत इति । सा च विद्याऽविद्या च । मिथ्याज्ञानमविद्या । सा च संशयाद्यात्मिका । कोटिद्वयानवधारणं ज्ञानं संशयः । स च बाह्याभ्यन्तरप्रकारवान् । न तु त्रिविधः पञ्चविधो वा । लक्षणाभावात् । तत्र हि संशयमात्रं वा धर्मिविशेषो वा । नाद्यः । भागासिद्धत्वात् । अभेदकत्वाच्च । नेतरः । तदनिरुक्तेः । उल्बणविधिकोटित्वं तथा निषेधकोटित्वं समकोटित्वं च विशेष इति **परमन्यायाचार्या** इति चेत् । न । वह्निमत्त्वभावाभावसंदेहेऽतिरिक्तकोटेरसत्वात् । तत्रैवोल्बणत्वानुल्बणत्वे इति चेत् । न । प्रमेयत्वादौ कस्यचिद्वह्निसाहचर्यस्यैव भूयस उपलम्भात् । हस्तसमाचरितत्वाच्च । विलक्षणकारणोपलक्षितेऽवान्तरजातिभेदोऽस्तीति चेत् । न । तस्य साक्षात्कारित्वादिना परापरभावाभावप्रतिक्षिप्तत्वात् । अवच्छेदकाभावादेव न घटाभावादिवदुपाधिसामान्यम् । तथापि समानधर्मादिदर्शनं कथं हेतुतया व्यवतिष्ठेतेति चेत्सत्यम् । किंतु कोटिद्वयविज्ञप्तिरस्य कारणम् । सा च स्मृतेर्वाक्याद्वा । स्मृतिश्च समानधर्मदर्शनादन्यतो वेति परम्परया व्यवस्थितेः । न च विशेषा विशेषे व्यवतिष्ठन्ते । तस्यैव प्रतिक्षिप्तत्वात् । कर्तृकार्यवत् । एककोट्यवलम्बि जाग्रतो मिथ्याज्ञानं विपर्ययः । निद्राभिभूतज्ञानं स्वप्नः । किमितिवस्तुमात्रालोचनमध्यवसायः ।

सत्यज्ञानं विद्या । तच्च स्मृत्यनुभवभेदि । तत्रान्त्यस्य प्रमात्वम् । सत्योऽनुभवः प्रमा । सत्यत्वं न ज्ञानजातिः । साक्षात्कारित्वेन परापरभावानुपपत्तेः । न विषयधर्मभेदः । सर्वसाधारण्यात् । न ज्ञानवदुपाधिः । तदभावात् । न वस्तुस्वरूपम् । स्वतः प्रामाण्यापत्तेः । अनन्यात्मत्वमन्यतादात्म्यनिषेध इति चेत् । न । न रजतमिति ज्ञप्तेः स्वतः प्रामाण्यापत्तेः । घटोऽयमिति ज्ञानादेश्च सत्यविषयतानुपपत्तेरसंगतमिति चेत् । न । परानात्मकतयाऽनुभवस्य तादृशत्वात् । न च स्वतः प्रामाण्यापत्तिः । परात्मतानुभवसंदेहसत्वात् । न च सावधारणेन घट एवेत्यनेनातिप्रसक्तिः । निश्चयानुपपत्तेः ।

न च परात्मताप्रतिषेधवत्तयाऽननुभवः सत्यत्वम्। घटोऽयमित्यव्याप्तेः। किंतु परात्मतयानुपलम्भः। अत एव प्रामाण्यनिश्चये तत्वव्यवस्थितिः। तथा च न निश्चय इति निरस्तम्। प्रवृत्तिसामर्थ्यादेरेव तन्निश्चायकत्वात्। तत्साधकतमं च प्रमाणम्। अन्ये त्वीश्वरप्रमाणत्वसंग्रहार्थं कारकाकारकसाधारणं तदयोगव्यवच्छेद्यं निमित्तमङ्गीकुर्वते। अनाद्यबाध्यप्रमाणशब्दवाच्यता तूपेक्षणीया। प्रमितेरपि तत्प्रवेशापत्तेः। आयाममाने चातिप्रसक्तेः। वाच्यतयाऽयोगव्यवच्छेदोपलक्षणे तु[1] धंधनापत्तेः। प्रमेयादौ च कथं साधकतमत्वाभावधारणम्। स्वप्रमायां प्रमायां च निश्चेतुमशक्यत्वात्। मैवम्। उक्तोत्तरत्वात्। लिङ्गस्य चास्मन्मतेऽकरणत्वात्। तच्चाध्यक्षमनुमानं च। साक्षात्कारिप्रमासाधकतममध्यक्षम्। तत्सविकल्पकादिभेदेन भिन्नमित्युक्तम्। अनुमानं स्वार्थं परार्थं वा। स्वार्थं व्याप्तिपक्षधर्मतासंवेदनम्। अनुमित्यौपयिकसमस्तरूपोपेतवस्तुवाचकं वाक्यं परार्थम्। वर्णपदातिरेकिण एकैकाङ्क्षाविच्छेदकास्तदेकदेशा अवयवाः। पक्षवचनं प्रतिज्ञा। विशिष्टविभक्त्यन्तं लिङ्गवचनं हेतुः। दृष्टान्तवचनमुदाहरणम्। तस्य साध्ये उपसंहारः उपनयः। पुनः पक्षवचनं निगमनम्। वादादिकमन्यत्र। सुखादिपञ्चकस्य स्वस्वसामान्ये योगः।

पतनासमवायि[2]निदानं गुरुत्वम्। द्रवत्वादीनां त्रयाणां स्वसामान्ययोगः।

विधिभावनाहेतुक आत्मविशेषगुणो धर्मः, निषिद्धभावनाहेतुकश्चाधर्मः। श्रोत्रग्राह्योऽर्थः शब्दः। शास्त्र एव चैवमादि सुप्रसिद्धमित्यास्ताम्॥

## इति श्रीन्यायलीलावत्यां वैधर्म्यपरिच्छेदः समाप्तः॥

साधर्म्यत्वस्यान्वयिहेतुत्वेनात्मतत्वावबोधकत्वात्तत्परिच्छेदोऽयमारभ्यते। षण्णामस्तित्वं किं तत्। अस्तिशब्दवाच्यत्वमिति चेन्न। अभावेऽपि तुल्यत्वात्। भावत्वे सतीति चेन्न। तस्याप्यसिद्धेः। भावोऽयमितिबुद्धिविषयत्वं तदिति चेन्न। तस्याप्यनुगतस्यासिद्धेः। ज्ञातो भावः इ[3]त्यनुभवाच्च। अभावव्यावृत्तत्वमस्तित्वमितिचेन्न। स्वरूपस्य व्यावृत्तत्वात्। तदभावयोगित्वस्य परस्पराभावरूपताहन्तृत्वात्। एतेन विरोधित्वमपास्तम्। अन्योन्याश्रयाच्च। तादात्म्याभावे

---

१ °णे त्वनुबन्धना°। २ °यिकारणं गु°। ३ इति प्रत्ययाच्च।

तदभावाच्च। अन्यतायाः स्वरूपानतिरेकात्। अभावत्वस्य चानिरुक्तेः। नास्तित्वबुद्धिवेद्यत्वं तदिति चेत्। न। तस्या अनुगतनिमित्तं विना असिद्धेः। ज्ञातत्वेनानुभवाच्च। नापि पारतन्त्र्येण निरूप्यत्वम्। संबन्धस्याभावत्वापत्तेः। नापि निषेध्यनिरूप्यत्वम्। अभावप्रतिपक्षत्वस्य निषेध्यत्वस्याभावनिरुक्तिं विनाऽनिरुक्तेः। स्वरूपसत्त्वस्य षष्ठी प्रथमाभ्यां विवेकादनुपपत्तेः। सदिति बुद्धिवेद्यताया अभावेऽपि सत्वात्। तस्य भावविरुद्धस्वभावत्वादनारोप इति चेत्। न। समवायेऽप्यनारोपापत्तेः। तस्य स्वतोऽपि भावत्वमिति चेन्न। स्वरूपस्याभावेऽपि तुल्यत्वात्। सत्तासामान्यविरहस्योभयसमत्वात्। एतेनाभिधेयत्वादयो निरस्ताः।

ज्ञेयत्वं च न ज्ञानसंबन्धः। तत्रैव तदभावात्। नापि ज्ञानावभासेऽवश्यज्ञेयत्वम्। उत्तरप्रश्नसाधारण्यात्। नापि तदुन्नेयः स्वभावभेदः। तस्य परस्परव्यावृत्तत्वेनैव स्वीकारात्। नाप्याश्रितत्वमन्यसमवायित्वं। अन्यतत्रतया चोपलब्धिस्तद्योग्यता वा। समवायशब्दयोस्तु निरुक्ते प्रतिषेधात्। येन च यत्समानं तयोरेव समानता किं तेन अन्येन वा। नाद्यः। स्वात्मन्यवृत्तेः। नेतरोऽनवस्थितेः। एतेनैव षण्णामिति व्याघातः। धर्माधर्महेतुत्वमवश्यम्। जातेरप्यन्वयव्यतिरेकात्। न च व्यक्त्यवच्छेदेन कृतार्थता। विपरीतापत्तेः। न च व्यक्तिप्राशस्त्याभिधानाद्व्यक्तिरित्येतदेव प्राप्तम्। जातेरप्यभिधानात्।

सामान्यादेश्च सत्तायोगित्वान्न सामान्यवत्वम्। सामान्ये च सामान्यत्वम्। नित्यत्वे सति अनेकसमवेतत्वं तदितिचेन्न। द्रव्येऽपि गुणवत्वसत्वाद्द्रव्यत्वापलापात्। मनसि च न मनस्त्वं। सुखाद्युपलब्धीन्द्रियत्वेनैवान्यथासिद्धेः। न च वेगवत्वं। अदृष्टसंबन्धेनैव क्रियोपपत्तेः। अन्यथा स्पर्शस्याप्यनुमानापत्तेः। परत्वापरत्वे च द्रव्यत्वान्नित्ये गगनादावपि। भूतत्वं च गुणत्ववत्सामान्यम्। न च व्यञ्जकाभावः, बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्तायास्तत्त्वात्। न चैवं मूर्तसिद्धौ जातिसंकरापत्तौ तुल्ययोगक्षेमयोर्द्वयोरप्यभावः। गुणत्वस्यापलापापत्तेः। न चाकाशं द्रव्यातिरिक्तापरसामान्यसंबन्धि, एकत्वात्

१ नास्तीतिबु॰। २ ॰कानुपपत्तेः। ३ ॰पिसत्वात्। ४ ॰यो व्याख्याताः। ५ ज्ञे॰।

दिगादिवदितिवाच्यम् । व्यावर्त्यद्रव्यत्ववत्तत्सिद्धौ बाधात् । अन्यथा तु तद्व्यवच्छेदवैयर्थ्यात्। अव्यवच्छेदे द्रव्यत्वासिद्धौ सिद्धान्तविरोधात्।

दिक्कालयोश्च न सर्वनिमित्तकारणत्वम्। उपाधेरेवान्वयव्यतिरेकित्वात्। तदवच्छेदकत्वस्य गगनादिसाम्यात् । सुखादिष्वात्मादिबन्दीग्रहस्यात्यन्ताभावव्यतिरेकमुपादायैवोन्मोचनात्। सामग्रीकादाचित्कत्वस्य पूर्वपूर्वसामग्र्यनुविधानात्। आधारत्वस्य संबन्धभेदत्वेऽन्यथासिद्धत्वात्। निमित्तताप्रवेशे तु तद्भेदकमानाभावेन व्यवहारानुपपत्तेः । आधारत्वात्तदनुमानस्याऽन्यथासिद्धिशङ्कादूषितत्वात्। घटादौ च पीठाद्याधारे निमित्तनिमित्तिभावाभावात् । गगनादौ च न महत्त्वम्। अवच्छेदोपहितव्यक्तिव्यङ्ग्यत्वात्परिमाणस्य। गगनमपरिमितमिति व्यवहाराच्च । न चैकत्वं, स्वरूपाभेदेनाप्युपपत्तेः। न च संस्कारत्वम्। मानाभावात् । गोशब्दवाच्यनानाजातीयवस्तुवदनुगतप्रत्ययासिद्धेः । अभिधानस्यापि तथैवोपपत्तेः। अन्यथा तत्राप्यनुमानापत्तेः। न च तत्र व्यवस्थापकाभावोऽत्र तूत्पादकसजातीयावस्थोत्पादकत्वमिति वाच्यम्। शब्देऽपि तत्सत्वात् । न चायं नियमोऽपि । ज्ञानेन तदभावात्। विषयप्रवणत्वमिति चेन्न। इच्छादावपि तत्सत्वात् । स्वाभाविकमिति चेत्। न। स्मृतावभावात्।

अदृष्टत्वं च संस्कारत्वधर्माधर्मौ नोभयवृत्तिसामान्यवन्तौ विरोधिगुणत्वात् सुखदुःखवदिति चेन्न। सत्तागुणत्वादिसंबन्धेन[1] बाधात् । उभयमात्रवृत्तिसामान्यनिषेधे च गन्धेन व्यभिचारात्। शब्दादौ चैकत्वम्। न च गुणत्वात्तद्बाधः। प्रत्यक्षस्यान्यथासिद्धेः द्रव्ये द्रव्यत्ववत्। अत एव नानवस्थितिः। अवस्थितिदर्शनात् । परत्वापरत्वगुरुत्ववेगनैमित्तिकद्रवत्वादीनां च रूपरसगन्धस्पर्शस्वाभाविकद्रवत्ववत् न विशेषगुणत्वम्। परामृष्यमाणलिङ्गवत् मुख्यमपि सुखं जनयतु। स्पर्शश्च शीतः कम्पस्य कारणम्। असमवायिकारणत्वं वा दृष्टस्य सुखदुःखे प्रति समस्तविशेषगुणोत्पत्तावसामर्थ्येऽपि विशेषव्यवस्थितिसंभवान्निमित्ततावदिति सर्वं समाकुलमिति चेत्। मैवम् । सत्तासंबन्धबुद्धिस्तावन्नाभाव इत्यध्यक्षसिद्धम्। नचेयमनारोपिता।

---

१ °दिसत्वेन बा°।

समवाये तदभावात् । तथा चैवंविधारोपस्याभावो विरोध्येव न । यत्रैतादृशसंवेदनं तत्रैवान्वयव्यतिरेकसिद्धेः । तथा चैतदेव साधर्म्यं सैव च बुद्धिस्तदालम्बनसंवेदिका । विरोधात् । न च बुद्ध्यन्तरेण व्यवस्था । सर्वासामस्मदादिभिरवेदनात् । योग्यतायाश्च व्यावृत्तरूपानतिरेकादिति चेत् । न । प्रमेयत्ववाच्यत्वनियमसंवेदनवत् । सामान्येनास्यापि स्फुरणात् । ज्ञेयत्वं च ज्ञानजातीयं तावदेकम् । तेन यदुपहितं तदपि तादृगेव । अन्यथा तत्रानुगतवेदनानुपपत्तेः । स च संबन्धं विनेत्यनुवृत्तिव्यावृत्त्योस्तुल्यः । ज्ञेयोऽयमिति बुद्धिवेद्यत्वं वा । एतेनाश्रितत्वं व्याख्यातम् । येन च यत्समानमिति च प्रमात्वलक्षणवद्वाचकः शब्द इतिवच्चोपपद्यते ।

धर्मादिहेतुत्वं च व्यक्तेरेव । तस्या एव सकलदेशकालस्वभावनियमोपपादकत्वात् । ताश्च विप्रकीर्णदेशकालतया नान्वयव्यतिरेकग्राहकप्रत्यक्षे विषयभावमापद्यन्त इति जातिरपि हेतुफलभावनिश्चयार्थमुपादीयते । न च जातिरपि हेतुः । तस्याः स्वतोऽन्वयव्यतिरेकाभावात् । व्यक्त्युपादानेऽन्यथासिद्धेः । जातित्वं च यदि परमेव सत्तायाः तदा द्रव्यादेरपि जातिता । अपरं चेन्न सत्तायामाश्रितम् । न हि तस्या अपरं तत्रैव समवेयात् । विरोधित्वे च सत्प्रत्ययवज्जातिप्रत्ययस्यान्यथासिद्धेः । न च सामान्यत्वं, स्वात्मन्यवृत्तेः । तत्रापि सामान्यान्तरपरिकल्पनेऽनवस्थितेः । न च सामान्यत्वद्वयं, परापरभावानुपपत्तेः । विरोधित्वे साधारणधीध्वनिजनकत्वानुपपत्तेः ।

मनस्त्वं च मूर्तत्वे सति इन्द्रियत्वेनासाधारणजातिमत्त्वम् । मनसः कथमन्यथा सुखाद्युपलब्धिसाधकतमत्वम् । एकैकशो व्यभिचारात् । अणुत्वात्मसंयोगिताकारस्यासाधकतमसाधारण्यात् । कर्णशष्कुलीवद्विशिष्टादृष्टोपगृहीतस्येति चेन्न । अनेकत्वे सत्यसाधारणसाक्षात्कारिप्रमाकारणतयाऽवान्तरजातिमत्ताया नियमात् । वेगश्चाशुसंचारभेदस्य वेगहेतुत्वेन प्रतिबन्धावधारणात् । पवनवत् । अन्यथा कर्मापि नानुमीयेत । अदृष्टविशेषादेव संयोगोपपत्तेः ।

स्पर्शश्च तत्कार्यजातीये उद्भूतस्पर्शतया व्याप्तः । स च निवर्तमानः तमादाय निवर्तते । ततो रूपगुरुत्वरसादयोऽणूनां कार्यैकलिङ्गगम्याः सन्तः

तल्लिङ्गानुपलब्धेरेवासंतोऽवधार्यन्ते । न च मनसः तदारम्भे स्थवीयस्तया युगपन्नानाज्ञानोत्पत्तिरिति वाच्यम् । अवयविन इन्द्रियभावाभावात् । न च परत्वादिकं व्योम्नि । परबुद्धिव्यपदेशस्यावच्छिन्न एव संभवात् । पृथक्त्ववत् । न च नित्यमहत्त्ववदपरिमितेऽपि परिमाणव्यवहारादत्रापि परापरव्यवहार इति वाच्यम् । महद्बुद्धिवेद्यस्य परिमाणत्वात् । अस्य चावान्तरावच्छेदाप्रतिभासेऽपि भूगोलकमहत्त्ववत्परिमाणत्वोपपत्तेः । अन्येभ्योऽपि महानिति बोधोपपत्तेः । प्रकृते त्ववधिविरहाद्व्यपदेशानुपपत्त्या परबोधस्यापि तत्तुल्यविषयस्यानुपपत्तेः । न च भूतत्वम् । अर्थत्ववदुपाधिसामान्यबोधेनैवोपपत्तेः । न च गुणत्वापलापः । तत्र विशेषस्योक्तत्वात् । यदि त्वसत्यपि विशेषमानेऽन्यथासिद्धसंवेदनं सामान्यमास्थीयते ततो भूतत्वमूर्तत्वप्रसक्तौ जातिसंकरापत्तिरिति बोद्धव्यम् ।

किंशुककुसुमादिकार्यस्य वसन्तादिकालविशेषप्रसूतत्वे निश्चिते अन्येषामपि कार्याणां कार्यत्वेन स्वस्वपूर्वकालजन्यत्वानुमानात् । एवं कुङ्कुमादेर्देशविशेषजन्यत्वेनान्यत्रापि देशविशेषजन्यत्वानुमानात् । देशकालव्यवहारविषयाणामुपाधीनां कार्यमात्रनिमित्तत्वमेव । दिक्कालयोः सर्वनिमित्तत्वम् । दिक्कालौ वा सर्वकार्यनिमित्तं विभुत्वे सत्यनित्यविशेषगुणरहितत्वादीश्वरवत् । कारणत्वं च स्वव्यतिरेकाध्यारोपे कार्यव्यतिरेकप्रसङ्गयोग्यस्वभावत्वात् । दिक्कालौ च सर्वोत्पत्तिमतां निमित्तं, तत्पूर्ववर्तित्वे सति तदुत्पत्त्यधिकरणत्वेन व्यवह्रियमाणत्वात् । पटतन्तुवत् । गगने च महत्त्वं अणुपरिमाणवदवच्छेदाभावेऽपि परिमाणत्वव्यञ्जकत्वात् । एकत्वं च संख्यापरिमाणयोः समानदेशत्वनियमात् ।

संस्कारत्वं च स्वकारणसजातीयकार्यजनकत्वं असति बाधके सामान्यनिष्ठम् । सदृशकार्यस्य तथैवोपलब्धेः । अन्यथा कार्यसादृश्यस्याकस्मिकत्वप्रसङ्गात् । स्वभावादिति चेत् । न । व्यावर्तकस्य स्वभावस्य तथात्वे सदृशात्कार्यात्सदृशकारणानुमानविलयापत्तेः । अनुगतत्वे च सामान्यं सादृश्यं संस्कारत्वम् । बीजशब्दादौ च, परापरभावानुपपत्तिरेव बाधिका । तद्वदत्रापि जातिभेदोऽपि स्यादिति चेत् । न । असति बाधके कारणैकजातीय-

त्वेन कार्यसादृश्यप्रतिबन्धात् । न च कारणैकजातीयत्वात्कार्यैकजातीयतापत्तिः । संयोगविभागयोरेकजातीयतापत्तेः । यस्य यद्विजातीयावस्थासमवेत उत्पन्नः तस्य तदवस्थापादकगुणत्वं वा संस्कारत्वं उपाधिसामान्यम् । यथा चैकजातीयावच्छिन्नानामेकगुणत्वेन सूत्रकर्तृव्यवहारविषयत्वं तथैकोपाधिसामान्यवतामपीति । ज्ञानत्वे चेच्छादिव्यावृत्तस्वभावस्य विषयप्रवणत्वमपेक्षितमिति । न वा दृष्टत्वम् । बुद्धेरुपाधिनान्यथासिद्धेः । शब्दादौ चैकत्वे तत्प्रतिबद्धसंयोगादिप्रसक्तावनित्यस्य सावयवद्रव्यत्वेन कुड्यादिगमनप्रतिघातापत्तौ भ्रान्तत्वाद्बुद्धेः । एवमन्यत्रापि गुणानामगुणत्वनियमावधारणं प्रतिकूलतर्कैरुन्नेयम् ।

विशेषगुणत्वं च शास्त्रीयां रूढिमाश्रित्य पङ्कजादिपदवत्तदुपाधिभिर्नियतमित्यदोषः । लिङ्गपरामर्शस्यैव जनकता समारोप्य व्यवह्रियते । शीतस्पर्शप्रबुद्धश्चाध्यात्मिकवायुस्तत्संयोगः कम्पनिदानम् । अतएव कुम्भिते पवने तदभावः । शीतयोनिता चानिलस्येति चरकाचार्योपदेशोऽपि । उभयासमवायित्वे कल्पनागौरवात् । व्यापकमनोयोगस्यैव तादृशत्वेऽसमवायिकारणलक्षणेऽदृष्टेतरत्वस्यापेक्षितत्वात् । असमवायिकारणमिति तु तत्र परिभाषा । सा च सत्यपि निमित्ते क्वचिददृष्टादौ न वर्तते । तान्त्रिकाणामव्यवहारात् । सत्यपि गङ्गासामीप्ये घोषादन्यत्र गङ्गोपचारवत् । कर्मणि च पूर्वसंयोगादेरन्यथासिद्धं संनिधित्वेनाहेतुत्वात् । स्यादेतत् यद्यन्वयी हेतुः स्यात् । न चैवम् । अनुपाधित्वस्याप्रतिबन्धत्वात् । अन्यथानैकान्तिके सोपाधित्वोद्भावनापत्तेः । साध्याभावव्यावृत्त्या तु साध्यसंबन्धित्वस्य प्रतीतिभ्यां व्याघातात् । मैवम् । अयोगव्यवच्छेदस्य नियमार्थत्वात् । तथापि काल्पनिकविपक्षात् व्यतिरेक इति चेन्न । अविद्यमानविपक्षत्वस्यान्वयित्वात् । न च विपक्षस्य ततो हेतुव्यतिरेकस्य वा कल्पितत्वे विपक्षत्वं संभवति । एवमपि विशेषो वाच्य इत्यादावन्वयित्वव्यवस्थितेः । व्यतिरेकाभिधाने व्याघातापत्तेः ॥

## इति श्रीन्यायलीलावत्यां साधर्म्यपरिच्छेदः ॥

रूपरूपिणां गुणतद्वतामन्येषां च समयोत्तराधरभावेन उत्पादानुपलब्धौ एककालव्यवस्थितौ सूक्ष्मसमयभेदाकल्पनान्न हेतुफलभावः । अहेतुफलभा-

वोऽहेतुकसदातनभाववदसदातनोऽपि भावस्तथेत्यात्मादितत्वाव्यवस्थितौ न निःश्रेयसप्राप्तिरिति तत्प्रक्रियापरिच्छेदोऽयमारभ्यते ।

तत्र द्रव्यप्रक्रिया तावदणुभ्यां द्व्यणुकं ततस्त्र्यणुकम् । तदसिद्धं द्व्यणुकासिद्धेरिति चेत् । न । त्र्यणुकं कार्यद्रव्येणैवारभ्यते महत्वात् घटादिवदिति मानात् । न चेदेवं महत्वं न स्यात् । अणुपरिमाणस्यानारम्भकत्वात् । अणुसंख्यैव वारभतां महत्वं द्वित्वमिव द्व्यणुकमिति चेत् । न । तथा सति घटेऽपि परमाणुसंघातारब्धत्वप्रसंगे भग्नस्य सहसाऽदृश्यत्वापत्तेः । द्व्यणुकेनापि त्र्यणुकारम्भे घटे तुल्यताप्रसंगः इति नास्ति विपक्षबाधकम् । आरम्भकसंख्यापकर्षतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात् । न चैकं वस्तु द्रव्यारम्भकमिति द्वितीयारम्भकत्वात्त्र्यणुकसिद्धिः । न चैवं कदाचित्त्र्यणुकं परमाणूपादानकम् । द्व्यणुकोपादानकस्य तदुपादानकत्वानुपपत्तेः । न हि तन्तूपादानकस्य पटस्य कदाचिदंशूपादानकत्वं सिद्ध्यतीति **किरणावलीकारः** । तत्र द्वितीयारम्भकत्वेऽप्यणुद्वयारम्भकत्वस्यासिद्धेः । द्वितन्तुकेन सिद्धसाधनात् । जलावयविनस्तदवयवानां च जलजातीयजन्यतोपलम्भाच्च । निरुपाधिसंबन्धबलेन त्र्यणुकस्य कार्यद्रव्योपादानकत्वसिद्धिरस्त्विति चेत् । न । महदुपादानकत्वस्यापि सिद्धिप्रसंगात् । तत्र बाध उपाधिः । स इहापि भविष्यति । बाधेन तत्र साध्येतरत्वमुपाधिरवधार्यत इति चेत् । न । अबाधेऽपि तत्प्रसंगात् । तथा सत्यनुमानोच्छेदप्रसंग इति चेत् । अस्तु तर्हि महदुपादानकत्वं कार्यद्रव्योपादानकत्वं प्रत्युपाधिः । तत्कुतो द्व्यणुकसिद्धिरिति । अत्रोच्यते । कार्यद्रव्योपादानत्वं प्रति महद्द्रव्योपादानकत्वस्योपाधित्वनिर्णयहेतोः तर्कस्याभावात् । परिमाणत्वावान्तरसामान्यस्य महत्वाद्यवान्तरसामान्यव्यतिरिक्तस्य कार्याकार्यव्यक्तित्वस्योपलब्धेर्महत्ववत्तत्प्रतिबन्धस्याप्रतिकूलतर्काहतिबलेनैव उपाधेरपि निरासात् । अन्यथेन्द्रियादेरप्यसिद्धिप्रसंगात् । कार्यस्य तेजसो दृश्योपादानत्वनियमात् । कृत्स्नैकतन्तुस्वभावे पटे स एवावलम्ब इति प्रत्यभिज्ञानादारभ्याप्यारभन्ते । न च मूर्तानां समानदेशताव्याघातः । अन्यूनानतिरिक्तदेशस्य तथात्वादिति चेत् । न । अन्यून एव विरोधापत्तेः । संयोगे-

चाति प्रसंगात् । इति द्व्यणुकादिक्रमेणान्त्यावयविपर्यन्तमारम्भः । इति द्व्यणुकसिद्धिः ।

कथं पुनः पक्वघटे कारणगुणपूर्वकता रूपादीनां । असंभवद्विरुद्धधर्मसंसर्गो हि घटः प्रत्यभिज्ञायते । उपरिस्थितानामपाताच्च । तद्देशत्वतत्संख्यत्वतत्परिमाणत्वोपलब्धेश्च । अन्तः[1] पाकस्यापि सच्छिद्रत्वादवयविनां स्फटिकान्तरिन्द्रियप्रवेशवत् घटे बहिः शैत्यवेदनवदुपपत्तेः । न च स्पर्शवद्वेगवद्द्रव्याभिघाताद्द्रव्यनाशः । द्रव्यविरोधिकर्मोत्पत्तौ मानाभावात् । कर्मत्वस्य नभोविभागेन करकम्पे तत्परमाणुकम्पवदुपपत्तेः । न च संयोगमात्रं तद्धेतुः । पवनसंमुखधृतघटपटादेरपि नाशापत्तेः । कर्मण एवोत्पत्त्यसिद्धेः । नियतहेतुकुलालादिव्यतिरेकेऽपि जन्मवत्तस्यापि संभावितत्वात् । न चैवं द्व्यणुकनाशसिद्धिः । मानाभावात् । रूपं चाश्रयनाशादेव विनश्यति, कार्यरूपत्वात् । नष्टघटरूपवदित्यस्यापि प्रत्ययस्य प्रत्यभिज्ञाननिर्दलितत्वात् । विपक्षे बाधकाभावाच्च । पाकजा एवैते इति युक्तमिति चेत् । न । सूचीसंभेदनिर्दलितावयवारब्धपरम्परानष्टघटे घटान्तरोदयवत् सर्वस्योपपत्तेः । विरुद्धधर्माध्यासस्यापि काठिन्याकाठिन्यस्य दर्शनात् । न च स्पर्शभेदोऽसावन्य एव जात इति वाच्यम् । चक्षुषापि तत्प्रतीतेस्ततः संयोगभेद एवायम् । स च प्राक्तनो नास्त्यनुपलब्धेः । तन्नाशाय च क्रियैव दहनस्य कल्पनीया, इष्टत्वात् । स्पर्शवद्वेगवत्पवनसंबन्धबलेन पिठरोदरकुहरसंचारिजलतण्डुलोन्मथनविक्लेदकारिणि ज्वलज्ज्वलनज्वालाकलापे का संभावना पिठरावयवानां, तथा तन्मध्यपतितद्व्यणुकस्यापि का जीवितव्यवस्थितिरित्यनुमानमप्युदयमासादयति । तथाप्येक एव संयोगः किमिति नोदयनाशहेतुः । कल्पनालाघवात् । पूर्वध्वंससहकारिणा तज्जनने युगपदुत्पादस्यानुपपत्तेः । अन्त्यस्योपान्त्यनाश्यत्वाच्च । संस्कारस्यानुभवध्वंसिनः स्मृतिरूपज्ञानजननदर्शनाच्च । एवमेव किंत्वन्यताव्यवहार उपचारादिति **व्योमाचार्याः** । निवर्तकजनकदहनयोर्भेदेन वेति तत्रैव कालगणना ग्राह्या ।

---

१ अतः पाक° ।

ननु द्व्यणुकनाशानन्तरं कथं त्र्यणुकनाशः । तस्य स्वासमवायिकारणनाशनाश्यत्वादिति चेन्न । समवायिकारणनाशेऽपि क्वचिन्नाशात् । तत्र सर्वत्रासमवायिनाशपूर्वकत्वमुन्नीयत इति चेन्न । विपक्षे बाधकाभावात् । अनियतहेतुकतापत्तिरितिचेन्न । गुणनाशस्याश्रयनाशविरोधिभ्यां[1] नाशवदस्याप्युपपत्तेः । अन्यथा द्वित्वस्याप्याश्रयनाशनाश्यतानियमापत्तेः । शिष्टं शास्त्रे

॥ इति पाकजम् ॥

गुणस्य निमित्तनाशानाश्यत्वात् । अन्यथातिप्रसंगात् । साध्येतरत्वस्य च बाधैकगम्यत्वात् पूर्वमप्यवस्थितिसिद्धौ समानदेशनादिधर्मवतोरप्येकत्वैकपृथक्त्वयोर्नियतव्यङ्ग्यत्ववद्द्वित्वमपेक्षाबुद्धिव्यङ्ग्यमिति प्रक्रियाया असिद्धिरिति चेन्न । हेतोर्व्यतिरेकग्रहे तेनैव बाधात् । अन्यथा व्यतिरेकासिद्धेः । अत एव हुताशनबन्दीग्रहादपेक्षामतिजन्यं द्वित्वमितिस्थिते न द्रव्यधीरपेक्षाधीः । दूरादुभयद्रव्यावभासेऽप्येकत्वानवभासे तत्र द्वित्वानुत्पादात् । नाप्यविकल्पकैकसंख्यामतिः । संख्यायाः सविकल्पकापेक्षाधीजन्यत्वनियमात् शतसंख्यावत् । किं त्वेकैकत्वविशिष्टद्रव्यधीः । अविकल्पकज्ञानं च न संस्कारजनकं, तद्विषयस्मरणाभावात् । तदेकगम्यत्वाच्च । तस्य ज्ञानत्वेन संस्कारानुमानस्य तु पट्वादराद्युपाधिमादायान्यथासिद्धेः । द्वे द्रव्ये इति ज्ञानसमकालं द्वित्वनाशे तज्ज्ञानं भ्रान्तं स्यादिति नापेक्षाबुद्धिनाशनाश्यं द्वित्वमिति चेन्न । ज्ञानस्य तत्समये द्वित्वविशिष्टमित्यस्यानवगाहित्वात् । पूर्वापरतोदासीनद्वित्वविशिष्टत्वस्य सत्वात् । विशेषणज्ञानपूर्वकतातूत्तरत्र विशिष्टज्ञानस्य व्यवस्थापयिष्यते । अतीतगोचरद्वित्वाद्युत्पत्तौ का वार्ता । न काचित् । कथं तर्हि तद्व्यवहारः । यथा गुणादाविति ब्रूमः । उपादानाभावस्यैव बाधकत्वात् । एतेनानागतव्यवहारोऽप्युक्तः ॥ इति संख्या ॥

त्र्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयानपेक्षत्वे सति परिमाणत्वात् । सर्वसिद्धसंख्याजन्यपरिमाणवत् । परिमाणजन्यमेवैतत् स्यादिति चेन्न । परिमाणस्य विजातीयात्मप्रतियोगिप्रकर्षजननविरोधात् । अन्यथा महतामपि क्वचिदणुपरिमाणारम्भकतापत्तेः । ह्रस्वत्वस्य चामहद्वृत्तित्वेन महत्वानारम्भ-

१ गुणस्याश्रय° ।

कत्वात् अणुत्ववत् । अन्यथा अत्रापि तत्वतापत्तेः । संख्या तर्हि नारम्भिका । तस्याः स्वाश्रयप्रकृष्टपरिमाणयोरुभयोरपि तुल्यत्वात् । परिमाणानारम्भकत्वे हेत्वभाव इति चेत् । न । बहुत्वस्य महत्वारम्भे क्लृप्तशक्तित्वात् । अणुत्वस्य च परिमाणं प्रति उपाध्यन्तरानपेक्षेण स्वरूपेणादृष्टशक्तिकत्वात् । न च नानैकत्वं जनकं, एकहेतुकत्वोपपत्तौ नानाहेतुकत्वे कल्पनागौरवात् ॥

ननु संख्यापरिमाणादीनां न तावत्परिमाणं प्रति हेतुत्वम् । परिमाणमात्रेऽन्योन्यं व्यभिचारात् । नापि तद्व्यक्तिभेदं प्रति, आनन्त्यव्यभिचाराभ्यां दूषितत्वात् । अतोऽवान्तरजातिस्वीकारे विरुद्धयोः समावेशानुपपत्तेः । दृश्यते चोभयहेतुकत्वं यथा समपरिमाणोभयारब्धादुत्कर्षवत्त्रिभिरारब्धस्य परिहीनपरिमाणत्रितयारब्धादुत्कर्षोपलम्भात् । मैवम् । एकैकारभ्यमहत्वावान्तरजातेरन्यदेव महत्वोत्कर्षरूपं सामान्यं प्रत्यसमवायिकारणसमुच्चयस्य हेतुत्वात् । प्रचये च नास्ति कारणत्वम् । तूलाद्यवयविनामनारम्भकत्वात् । एकादिप्रत्ययस्य पलालपुञ्जवदुपपत्तेः । मैवम् । घनद्रव्यस्य स्वाश्रयद्रव्यारम्भे पलालादावेकदेशाकर्षणे समुदायाकर्षणप्रसंगात् । अनारम्भे भ्रान्तत्वात्तूलकादौ बाधकाभावात् । घनाघनसाधारणेयं युक्तिः किं न बाधिकेति चेत् । न । तोयाद्यवयविविच्छेदापत्तेरित्यास्ताम् ॥ **इति परिमाणम्** ॥

ननु द्वित्वद्विपृथक्त्वयोरपेक्षाबुद्धिः किं युगपदुत्पद्यते क्रमेण वा । नाद्यः । ज्ञानयौगपद्यनिषेधात् । द्वितीये तु द्वित्वापेक्षाबुद्धेरनन्तरं द्वित्वद्विपृथक्त्वापेक्षाबुद्ध्योरुत्पादे तदनन्तरं च द्विपृथक्त्वापेक्षाबुद्ध्या द्वित्वजनकापेक्षाबुद्धिनाशे द्विपृथक्त्वद्वित्वसामान्यज्ञानयोरुत्पादे अपेक्षाबुद्धिनाशात् द्वित्वनाशे द्वित्वस्य विशेषणस्याभावात्कथं तदुत्तरकालं द्वित्वविशिष्टपृथक्त्वप्रत्ययः । न च द्विपृथक्त्वं नामापरं सामान्यमस्ति । अथ पूर्वं द्विपृथक्त्वजनकापेक्षाबुद्ध्युत्पादः । तथा सति द्विपृथक्त्वस्यैव नाशात् द्वित्वविशिष्टप्रत्ययो न स्यादिति चेन्न । उभयैकत्वैकपृथक्त्वसमुदायालम्बिज्ञानादुभयोत्पत्तौ सर्वस्योपपत्तेः ॥ **इति पृथक्त्वम्** ॥

उभयकर्मजस्तु संयोगो न भिन्नः । एकत्वेनाध्यवसायात् । उभयदीपजबुद्धिवत् । अत एव नैकस्यान्यथासिद्धिः । सामान्येन हेतुत्वावधारणात् ।

अजस्तु न संयोगोऽप्राप्तप्राप्तेरेव तदात्मकत्वात्। अजस्य तु संयोगस्यायुतसिद्धसंबन्धिनिष्ठत्वेन समवायाद्भेदानुपपत्तेः। अवयवावयविभावाभाव एव युतसिद्धिरिति चेन्न। गुणादेरसमवायित्वापत्तेः। एषां स्वातन्त्र्येणाश्रयान्तरासमवायित्वमयुतसिद्धिरिति चेन्न। तुल्यत्वात्॥ **इति संयोगः॥**

ननु संयोगाभाव एव विभागव्यवहारोऽस्तु। मैवम्। संयोगविनाशानुपपत्तेः। विभागस्य संयोगविनाशहेतुत्वात्। कर्मैव तज्जनकमस्तु अन्वयव्यतिरेकाभ्यां विभागवदिति चेन्न। कर्मणोऽविरोधित्वेन व्यधिकरणस्य तन्नाशकत्वायोगात्। तथा च स्वीयस्वीयकर्मजन्यानामङ्गुलीतरुसंयोगादीनां केवलेनाङ्गुलीस्पन्देनानाशप्रसंगात्। न च संयोगनाशात्तन्नाश इति वाच्यम्। कर्मजसंयोगे संयोगस्याकारणत्वात्। अकारणनाशस्याकार्यनाशेऽसामर्थ्यात्। व्यधिकरणमपि कर्मैव नाशकमस्तु। न चातिप्रसंगः। स्वाश्रयाश्रितपरम्परासंयोगस्यैव नाश्यत्वात्। न विरोधिनः। समानाधिकरणस्यैव नाशकत्वमिति असति बाधके संकोचानुपपत्तेः। एवं कारणनाशस्यैव कार्यनाशकत्वमित्यत्र बाधकाभावात् आश्रयाश्रितसंयोगनाशनाश्यः संयोगः स्यादिति निरस्तम्॥ स्फुटद्वेणुशब्दाच्च विभागोऽवगम्यते। स हि न वंशदलद्वयसंयोगनाशापेक्षवंशदलाकाशसंयोगजन्मा, संयोगजस्य शब्दस्य संयोगनिमित्तकारणतोपलम्भात्। भेरीसंयोगजस्य शब्दस्य दण्डसंयोगनिमित्ततावत् अभिघातजः स्यादिति चेत्। न। विमुखगतिदलयोस्तदभावात्। वायोः स्यादिति चेन्न। तस्य स्पर्शादिलिङ्गकस्य तदनुपलम्भेनैवासत्त्वावधारणात्। अन्यथा सर्वत्रातीन्द्रियवायुसंयोगकारणताया अनिराकरणादिति सिद्धस्तावद्विभागः। सतु विभागजः। यथा वंशदलपाटनानन्तरं क्रियया वंशदलयोर्विभागः। ततश्च नभोभागविभागः॥

ननु क्रमकल्पनेयमनुपपन्ना। अबाधितस्य यौगपद्यस्य वेदनात्। या विभागद्वयजनिका सा द्रव्याविरोधिभागजनिकेति बाधकमस्तीति चेन्न। विपरीतापत्तेः। या विभागद्वयजनिका सा विरोधिविभागजनिकेति कमलदलोन्मीलनादौ विभागजविभागोत्पत्तौ विपरीतापत्तेः। यदविरोधिभागज-

नकं न तद्विरोधिविभागजनकं यथा पञ्चशाखाकर्म[1] । इयमप्यविरोधिविभागजनिका यदि स्यात् विरोधिनं न जनयेदविशेषादिति तत्सिद्धिरिति चेन्न । नियमासिद्धेः । व्यभिचारानुपलम्भात् तत्सिद्धिरिति चेन्न । कर्मावान्तरजातिभेदस्योपाधित्वात् । व्यभिचारानुपलम्भेऽप्यप्रयोजकत्वात् । मैवम् । कर्मावान्तरवैचित्र्यस्यानुपलब्धेः । विरोधिविभागार्जनानुकूलकर्मवैचित्र्यनिवृत्तिरुपाधिरिति चेन्न । नोदनजन्यविशेषस्य व्यतिरेकेऽप्यभिघातात् । विरोधिविभागदर्शनात् । एवमभिघातव्यतिरेकेऽपि नोदनात् उभयसाधारणस्यैकस्यासिद्धेः, समव्याप्तिकत्वाच्च । अविरोधिविभागकस्य विरोधिविभागजननानुकूलवैचित्र्यव्यावृत्त्या सर्वत्राव्यभिचारोपलब्धेः । धूमार्द्रेन्धनवत् साधनाव्यापकत्वाभावात् ।

नन्वेवं यदजनकसंयोगजनकं न तज्जनकसंयोगजनकम्, यथाङ्गुल्याकाशसंयोगजनकं कर्म । एवं तन्तुद्वयसंयोगजनकात्कर्मणः तन्त्वाकाशसंयोगो न स्यादिति । अस्तु, तथाप्यङ्गुल्याकाशसंयोगाच्छरीरसंयोगवत् तन्त्ववयवसंयोगादेव तन्त्वाकाशसंयोगोपपत्तेः । यत्पुनरुक्तमत्र[2] कैश्चित्—एककर्महेतुकत्वे विभागस्य द्रव्यविरोधित्वाविरोधित्वमनुपपन्नं, कारणावैचित्र्ये कार्यवैचित्र्यस्याकस्मिकत्वप्रसंगादिति । तन्न । एकस्यैव कर्मणः संयोगविभागजनकत्वदर्शनात् । तथा कारणाकारणविभागजन्यविभागः, यथाङ्गुलीतरुविभागात् पाणितरुविभागः ।

नन्वत्र किं प्रमाणं । विभक्तबुद्धिरिति चेन्न । तदसिद्धेः । अन्यथा कर्मापि किं नाङ्गुलीकर्मजं स्यादिति भूषणः । तदसंगतम् । यथैकदेशसंयोगविभागाभ्यां देवदत्ते संयुक्तविभक्तबुद्धिः न तथा अङ्गुलीकर्मणा देवदत्ते चलतीति मतिरिति युक्तिसंभवात् । रथे चलति देवदत्तचलनाप्रतीतिवत् स्यादिति चेत् । न । रथेन गत इति प्रतीतेः संभवात् । कर्मणश्च संयोगविभागजनकत्वावधारणनियमात् । सजातीयारम्भानुपलम्भाच्च अवयवकर्मैव सर्वत्र विभागारम्भकमस्तु । अन्यथा अवयवसंयोगेऽप्यसंयोगिनो विभागेऽप्यविभागिनो[3] युतसिद्धिप्रसंगात् । मैवम् । न हि तत्संयोगेऽप्यसंयोगित्वं युतसि-

---

१ पञ्चशाखशाखाकर्म° । २ यत्पुनरत्र कैश्चिदुक्तम् । ए° । ३ ° गिनी यु° ।

द्धिः । अपित्वसंबद्धयोः सत्वम् । न च तन्नित्यसमवायपक्षे संभवति । न च कर्मैवारम्भकम् । व्यधिकरणत्वात् ॥ **इति विभागः** ॥

द्विपृथक्त्ववत् द्विपरत्वमपि किं न स्यादिति चेन्न । उभयवृत्तीनां गुणानां विजातीयपरस्परावधिसापेक्षव्यवहारेण परत्वनियमात् । अत्र च तद्व्यावृत्तौ द्विपरत्वव्यवहारस्य द्वित्वैकार्थसमवायनिबन्धनत्वात् । अस्तु वा तदपीत्यलं विस्तरेण ॥ **इति परत्वापरत्वे** ॥

बुद्धिर्न ज्ञाततागम्या । तदभावेऽपि शशविषाणादिविकल्पोपपत्तेः । संबन्धिद्वयं संबन्धेषु प्रत्येकं सामान्यालम्बनमितिचेत् । न । सत्यासत्यविषयत्वानुपपत्तेः । तथा सति कथं घटस्य ज्ञानमिति चेत् । ज्ञाततापि कथमिति तुल्यत्वात् । आधाराधेयभावादिति चेन्न । तस्यापि नियमानुपपत्तेः । स्वभावादिति चेत्तुल्यम् । घटो ज्ञात इति चाक्षुषी प्रतीतिरनुपपन्नेति चेन्न । अयं रुष्टो[1] दुःखितो हृष्ट इतिवदुपपत्तेः । फलानाधारत्वे घटं जानामीति कर्मत्वानुपपत्तिरिति चेन्न । हानादिव्यवहारजनकत्वादेवोपपत्तेः । तस्यैव कथं तदाधारत्वमिति चेन्न । अभावादेवोपपत्तेः । ज्ञायते च मानसप्रत्यक्षात् । जिज्ञासापेक्षमनोगम्यत्वे वर्तमानावभासत्वानुपपत्तेः । तदनपेक्षत्वेऽनवस्थेति चेत् । न । अनुव्यवसायप्रतीतिसामग्रीप्रतिबन्धकसुखादिविरहविशिष्टस्यैव ज्ञानमनःसंनिकर्षस्य प्रतीतिहेतुत्वात् ॥ **इति बुद्धिः** ॥

संस्कारश्च वेगात्मा । आपातादेको न भवति । उत्तरसंयोगविरोधित्वात् । कर्मवत् । न चैतदसिद्धम् । अन्यथाऽनाशप्रसंगात् । दूरसंयोगस्तद्धेतुरिति चेन्न । अन्तिकेऽपि घनसंयोगेन नाशात् । सोऽपीति चेन्न । अनियतहेतुकत्वापत्तेः । संयोगभेद इति चेत् । न । संयोगिजातिवैचित्र्ययोरनुपपत्तेः । एवम् । अबाधितप्रत्यभिज्ञानसिद्धत्वात् । नाशस्योभयहेतुकत्वात् । आश्रयविरोधिनाशोत्पादहेतुकगुणनाशवन्न कर्मणि तथात्वम् । दूरादूरघनाघनोत्तरसंयोगमात्रेण कर्मणो नाशदर्शनात् । न च वेगस्यैकत्वे कर्मसंतत्यनुपरमः । वेगसंतानोपरमवदुपपत्तेः ॥ **इति संस्कारः** ॥

**इति श्रीमदाचार्यवल्लभकृता न्यायलीलावती समाप्ता ॥**

---

१ रुष्टस्तुष्टो दुःखित इ० ।

